२ सृजत, एषा युष्माकं योग्या सेवा। अपरं यूयं सांसारिका इव मा भूत्वा स्वं स्वं
स्वभावं परावर्त्त्य पारमार्थिका भवत, तत ईश्वरस्य निदेशः कीदृग् उत्तमो
३ ग्रहणीयः सम्पूर्णश्चेति युष्माभिरनुभाविष्यते। कश्चिदपि जनोऽनुपयुक्तरूपं
स्वं श्रेष्ठं न विजानातु किन्तु ईश्वरो यस्मै प्रत्ययस्य यावत्परिमाणम् अददात्
स तदनुसारत उपयुक्तरूपं स्वं मनुताम् ईश्वराद् अनुग्रहं प्राप्तः सन् युष्माकं
४ प्रतिजनम् इत्याज्ञापयामि। यतो यथास्माकम् एकस्मिन् शरीरे बहून्य-
५ ङ्गानि सन्ति किन्तु सर्व्वेषामङ्गानां कार्य्यं समानं नहि; तथैवास्माकं बहु-
६ त्वेपि सर्व्वे जना अङ्गप्रत्यङ्गरूपेण ख्रीष्टे एकशरीरा भवामः। अस्माद्
ईश्वरानुग्रहेण विशेषं विशेषम् अनुग्रहदानम् अस्मासु प्राप्तेषु सत्सु कोपि
यदि भविष्यद्वाक्यं वदति तर्हि प्रत्ययस्य परिमाणानुसारतः स तद् वदतु;
७ यद्वा यदि कश्चित् सेवनकारी भवति तर्हि स तत्सेवनं करोतु; अथवा
८ यदि कश्चिद् अध्यापयिता भवति तर्हि सोऽध्यापयतु; तथा य उपदेष्टा
भवति स उपदिशतु यश्च दाता स सरलतया ददातु यस्त्वधिपतिः स
यत्नेनाधिपतित्वं करोतु यश्च दयालुः स हृष्टमनसा दयताम्।

९ अपरञ्च युष्माकं प्रेम कापट्यवर्जितं भवतु यूयम् अशुभे विरज्यमानाः
१० शुभेऽनुरज्यध्वम्। अपरं भ्रातृत्वप्रेम्ना परस्परं प्रीयध्वं समादराद् एको-
११ ऽपरजनं श्रेष्ठं जानीध्वम्। तथा कार्य्ये निरालस्या मनसि च सोद्योगाः
१२ सन्तः प्रभुं सेवध्वम्। अपरं प्रत्याशायाम् आनन्दिता दुःखसमये च
१३ धैर्य्ययुक्ता भवत; प्रार्थनायां सन्ततं प्रवर्त्तध्वं। पवित्राणां दीनतां दूरीकुरु-
१४ ध्वम् अतिथिसेवायाम् अनुरज्यध्वम्। ये जना युष्मान् ताडयन्ति तेभ्य
१५ आशिषं वदत शापम् अदत्त्वा दद्ध्वमाशिषम्। ये जना आनन्दन्ति तैः
१६ सार्द्धम् आनन्दत ये च रुदन्ति तैः सह रुदित। अपरञ्च युष्माकं परस्परं
मनसाम् एको भावो भवतु; अपरम् उच्चपदम् अनाकाङ्क्ष्य नीचलोकैः
१७ सहापि मार्दवं व्यवहरत; स्वान् ज्ञानिनो न मन्यध्वं। परस्माद् अपकारं
१८ प्राप्यापि परं नापकुरुत सर्व्वेषां दृष्टितो यत् कर्म्मोत्तमं तदेव कुरुत। यदि
भवितुं शक्यते तर्हि यथाशक्ति सर्व्वलोकैः सह निर्व्विरोधेन कालं याप-

यत। हे प्रियबन्धवः कमपि नापकुरुत किन्तु परकीयक्रोधाय स्थानं दत्त १९
यतो लिखितमास्ते परमेश्वरः कथयति 'दण्डदाने ममाधिकारोऽहमेव
प्रतिफलं दास्यामि।' इतिकारणाद्

२० 'रिपुर्यदि क्षुधार्त्तस्ते तर्हि त्वं तन्तु भोजय।
तृषार्त्तश्चेत्तदा तं त्वं पानीयं परिपायय।
तथा कृत्वाग्निराशिं त्वं तस्य मूर्द्ध्नि निधास्यसि।'

कुक्रियया पराजिता न सन्त उत्तमक्रियया कुक्रियां पराजयत। २१

---

१३ त्रयोदशोऽध्यायः।

१ राजप्रभृतिलोकानां वशीभूतत्वम् उचितं ८ व्यवस्थायाः सारं प्रेम ११ अन्धकार-
रूपं कर्म्म परित्यज्य दीप्तिरूपकर्म्मणोऽवश्यकर्त्तव्यत्वञ्च।

युष्माकम् एकैकजनः प्रधानपदस्य निघ्नो भवतु यतो यानि शासनपदानि १
सन्ति तानि सर्व्वाणीश्वरेण स्थापितानि; ईश्वरं विना पदस्थापनं न भवति।
इतिहेतोः शासनपदस्य विरुद्धाचरणे कृते सतीश्वरस्य निरूपणस्य विरुद्ध- २
कर्म्मकरणं भवति; अपरं ये तत् कुर्व्वन्ति ते स्वेषां समुचितं दण्डं स्वयमेव
घटयन्ते। शास्ता सदाचारिणं प्रति नहि किन्तु दुराचारिणं प्रति भयं ३
जनयति; त्वं किं तस्मान् निर्भयो भवितुम् इच्छसि? तर्हि सत् कर्म्म कुरु
तस्माद् यशो लप्स्यसे, यतः स तव मङ्गलार्थमेव ईश्वरस्य सेवको ४
भवति। किन्तु यदि कुकर्म्म करोषि तर्हि त्वं शङ्कस्व यतः स निर-
र्थकं खड्गं न धारयति; ये लोकाः कुकर्म्म कुर्व्वन्ति तानेव समुचितं दण्ड-
यितुम् ईश्वरस्य सेवको दण्डयिता भवति। अतएव केवलदण्डभयान्नहि ५
किन्तु मनसो निमित्तञ्च तस्य वश्येन भवितव्यं। एतस्माद् युष्माकं राज- ६
करदानमप्युचितं यस्माद् ये करं गृह्णन्ति त ईश्वरस्य सेवका भूत्वा
सततम् एतस्मिन् कर्म्मणि प्रवृत्तास्तिष्ठन्ति। अस्मात् करग्राहिणे करं दत्त, ७
तथा शुल्कग्राहिणे शुल्कं दत्त, अपरं यस्माद् भेतव्यं तस्माद् विभित,
यश्च समादरणीयस्तं समाद्रियध्वम्; इत्थं यस्य यत् प्राप्यं तत् तस्मै दत्त।

यूयं परस्परं प्रेम विना कस्यापि किमपि मा धारयत, यतो यः ८
परस्मिन् प्रेम करोति तेन व्यवस्था सिध्यति। वस्तुतः परदारान् ९

मा गच्छ, वधं मा कुरु, चौर्य्यं मा कुरु, मिथ्या साक्ष्यं मा देहि, लोभं मा
कार्षीः, एताः सर्व्वा आज्ञा, एतद्भिन्ना या काचिद् आज्ञास्ति सापि
१० स्वसमीपवासिनि स्ववत् प्रेम कुरु, अनया संक्षिप्ताज्ञया प्राप्यते। यतः प्रेम
समीपवासिनोऽशुभं न जनयति तस्मात् प्रेम्ना सर्व्वा व्यवस्था पाल्यते।
११ अस्माकं प्रत्ययकरणकालाद् इदानीं परित्राणस्य समयः सन्निधिम्
आगतः, इति ज्ञात्वा साम्प्रतम् अस्माकं निद्रातो जागरणं नितान्तम्
१२ उचितं। रात्रेः शेषमभवद् अरुणोदयकालः प्रायेणोपस्थितस्तस्माद्
१३ रङ्गरसो मत्तत्वं लम्पटत्वं कामुकत्वं विरोध ईर्षा, एता रात्रिकालीनाः
क्रियाः परित्यज्य दीप्ते र्योग्यां सज्जां गृहीत्वा दिवा विहितं सारस्या-
१४ चरणम् आचरामः। यूयं शारीरिकं सुखाभिलाषं परिपूरयितुम् आसा-
दनम् अकृत्वा प्रभुना यीशुख्रीष्टरूपेण वाससा सवस्ता भवत।

---

## १४ चतुर्दशोऽध्यायः।

१ खाद्याखाद्यार्थं भ्रातृगणस्य तुच्छीकरणमनुचितं १२ भक्ष्येण नहि किन्त्वविश्वासेन मनुजानाम् अशुचित्वम्।

१ यो जनः प्रत्यये दुर्ब्बलो भवति तं युष्माकं सङ्गिनं कुरुत किन्तु
२ सन्देहस्य विचारार्थं नहि। यतः किमपि द्रव्यं भोक्तुं निषिद्धं न, कस्य-
चिज्जनस्य प्रत्यय एतादृशो विद्यते किन्तु कश्चिदपरो जनो दुर्ब्बलतया
३ केवलं शाकं भुंक्ते। तर्हि यो जनः साधारणं द्रव्यमेव भुंक्ते स विशेषद्रव्य-
भोक्तारं नावजानीयात् तथा विशेषद्रव्यभोक्तापि साधारणद्रव्यभोक्तारं
४ दोषिणं न कुर्य्यात्, यस्माद् ईश्वरस्तं गृह्यं कृतवान्। यस्त्वं परस्य दासं
दोषिणं करोषि स त्वं कः? स निजप्रभोः समीपे पदस्थः पदच्युतो वा भवेत्
५ वरं पदस्थएव भविष्यति यत ईश्वरस्तं पदस्थं कर्त्तुं शक्नोति। अपरञ्च
कश्चिज्जनोऽन्येभ्यो दिनेभ्य एकमेव दिनं विशेषं मन्यते कश्चित्तु सर्व्वाणि
दिनानि समानानि मन्यते, एकैको जनः स्वे स्वे मनसि विविच्य निश्चि-
६ नोतु। यो जनः किञ्चन विशेषं दिनं प्रधानत्वेन मन्यते स यथा प्रभुं मान्यं
कृत्वैव तत् मन्यते तथा यो जनो विशेषं दिनं न मन्यते सोऽपि प्रभुं मान्यं

कृत्वा तन्न मन्यते; अपरञ्च यः कश्चिद् भक्ष्यमात्रं भुंक्ते स यथा प्रभुं मान्यं ७
कृत्वा ईश्वरस्य धन्यवादपूर्व्वकं तद् भुंक्ते तथा यो न भुंक्ते सोपि प्रभुं
मान्यं कृत्वा ईश्वरस्य धन्यवादपूर्व्वकं तन्न भुंक्ते। अपरम् अस्माकं कश्चित् ८
निजनिमित्तं प्राणान् धारयति किं म्रियते वा तन्न; किन्तु यदि वयं
प्राणान् धारयामस्तर्हि प्रभुनिमित्तं धारयामः, तथा यदि प्राणान् त्यजाम-
स्तर्हि प्रभुनिमित्तं त्यजामः; अतएव जीवने मरणे वा वयं प्रभोरेवास्महे।
यतो जीवतां मृतानाम् इत्युभयेषां लोकानां यथा प्रभु र्भवति तदर्थं ९
ख्रीष्टो मृत उत्थितः पुनर्जीवितश्च। किन्तु त्वं निजं भ्रातरं कुतो दोषी- १०
करोषि? तथा त्वं निजं भ्रातरं कुतस्तुच्छं जानासि? ख्रीष्टस्य विचार- ११
सिंहासनस्य सम्मुखे सर्व्वैरस्माभिरुपस्थातव्यं; यादृशं लिखितम् आस्ते

'परेशः शपथं कृत्वा वाक्यमेतत् पुरावदत्।
सर्व्वो जनः समीपे मे जानुपातं करिष्यति।
जिह्वैकैका तथेशस्य निघ्नत्वं स्वीकरिष्यति।

अतएव ईश्वर समीपेऽस्माकम् एकैकजनेन निजा कथा कथयितव्या। १२

इत्थं सति वयम् अद्यारभ्य परस्परं कोपि कमपि दोषिणम् १३
न कृत्वा येन स्वभ्रातु र्विघ्नो व्याघातो वा न जायते तादृशीमीहां कुर्म्मः।
किमपि वस्तु स्वभावतो नाशुचि भवतीत्यहं जानामि तथा प्रभुना १४
यीशुख्रीष्टेनापि निश्चितं जानामि किन्तु यो जनः किमपि वस्तु अपवित्रं
जानाति तस्य निकटे तद् वस्तु अपवित्रम् आस्ते। अतएव तव भक्ष्यद्रव्येण १५
तव भ्राता यदि मनोदुःखी भवति तर्हि त्वं भ्रातुः प्रियं कार्य्यं न करोषि
यदर्थं ख्रीष्टः स्वप्राणान् व्ययितवान् तं निजेन भक्ष्यद्रव्येण न नाशय।
अपरं युष्माकम् उत्तमं कर्म्म निन्दनीयं न भवतु। भक्ष्यं पेयं वा १६
ईश्वरराज्यस्य सारो नहि किन्तु पुण्यं शान्तिश्च पवित्रेणात्मना १७
जातानन्दश्च। एतै र्यो जनः ख्रीष्टं सेवते, ईश्वरस्य गोचरे सएव १८
ग्राह्यो भवति मनुष्याणां निकटेपि प्रशंसितो भवति। अतएव १९
येनास्माकं सर्व्वेषां निर्विरोधं परस्परं निष्ठा च तिष्ठति तादृशां चेष्टां

२० कुर्म्मः। भक्ष्यार्थम् ईश्वरस्य कर्म्मणो हानिं मा जनयत; सर्व्वं वस्तु
पवित्रमिति सत्यं तथापि यो जनस्तद् भुक्त्वा विघ्नं लभते तदर्थं तद्
२१ भद्रं नहि। तव मांसभक्षणसुरापानादिषु यस्यां क्रियायां तव भ्राता
पादस्खलनं प्राप्नोति विघ्नं वा प्राप्नोति दुर्ब्बलो वा भवति तादृशस्य
२२ द्रव्यस्य भोजनं पानं वा न भद्रं। यदि तव प्रत्ययस्तिष्ठति तर्हि स्वान्तर
ईश्वरस्य गोचरे तं स्थापय; यो जनः स्वमतेन स्वं दोषिणं न करोति स एव
२३ धन्यः। किन्तु यः कश्चित् संशय्य भुंक्ते, अर्थात् न प्रतीत्य भुंक्ते, स एवावश्यं
दण्डार्हो भविष्यति यतो यत् प्रत्ययान्न जायते तदेव पापं जनयति।

---

१५ पञ्चदशोऽध्यायः।

१ दुर्ब्बललोकानाम् उपकारकरणावश्यकता ८ सर्व्वेषां विश्वासिलोकानां उपदेशः १४ रोमिणां समीपं गन्तुं पौलस्य प्रतिज्ञा ३० निजार्थं प्रार्थनां कर्त्तुं तेभ्यो निवेदनञ्च।

१ स्वेषां तोषजनके कर्म्मणि नेहां कृत्वा दुर्ब्बललोकानां व्यवहरणसहनं
२ बलवताम् अस्माकम् उचितम्। अस्माकम् एकैको जनः स्वसमीपवासिनां
३ हितार्थं निष्ठार्थञ्च तोषजनकं कर्म्म करोतु। ख्रीष्टः स्वयं स्वस्य तुष्टार्थं
नेहां कृतवान् यथा लिखितम् आस्ते

'त्वन्निन्दकस्य निन्दाभिर् निन्दितोऽहं भवामि हि।

४ अपरञ्च वयं यथा सहिष्णुतासान्त्वनयो र्जनकेन शास्त्रेण प्रत्याशां लभा-
महे तन्निमित्तं पूर्व्वं या याः कथा लिखिता आसन् ता अस्माकम् उप-
५ देशार्थमेवासन्। सहनशीलः शान्तिदायकश्चेश्वर इत्थं करोतु यथा प्रभु
र्यीशुख्रीष्टइव युष्माकम् एकजनोऽन्यजनेन सार्द्धं मनस ऐक्यं स्थापयति;
६ अपरम् एकचित्ताः सन्तो मुखैकेनैवास्माकं प्रभो र्यीशुख्रीष्टस्य पितुरी-
७ श्वरस्य गुणान् कीर्त्तयत। अपरम् ईश्वरस्य महिम्नः प्रकाशार्थं ख्रीष्टो यथा
युष्मान् अन्वगृह्लात् तथा युष्माकमप्येको जनोऽन्यजनम् अनुगृह्लातु।
८ ईश्वरस्य या सत्यता पितृपुरुषं प्रति या च प्रतिज्ञा ते रक्षितुं तस्य
क्षमाकारणाद् भिन्नदेशिन ईश्वरस्य गुणान् वाचयितुञ्च यीशुः ख्रीष्ट-
९ स्त्वक्छेदनियमस्य निघ्नोऽभवद् इत्यहं वदामि। यथा लिखितम् आस्ते

'अतश्च भिन्नदेशीयलोकानामग्रतस्त्वहं।
प्रशंसां ते करिष्ये वै नाम्नि गास्यामि ते तथा।'

अपरमपि लिखति

१० 'मनुष्या अन्यदेशीया तल्लोकैः सह नन्दत।'

पुनश्च लिखति

११ 'हे सर्व्वदेशिनो यूयं धन्यं ब्रूत परेश्वरम्।
हे सर्व्वमनुजास्तस्य प्रशंसां कुरुताञ्चहम्।'

अपरं यिशायियोपि कथयामास

१२ 'यो ऽन्यदेशीयलोकानामाधिपत्यं करिष्यति।
यत्रान्यदेशिलोकस्य प्रत्याशां प्रकरिष्यति।
यिशयस्यतु वंशाद्धि तादृगुत्पत्स्यते पुमान्।

अतएव यूयं पवित्रस्यात्मनः प्रभावाद् यथा सम्पूर्णां प्रत्याशां लप्स्यध्वे १३
तदर्थं तत्प्रत्याशाजनक ईश्वरः प्रत्ययेन युष्मान् शान्त्यानन्दाभ्यां सम्पू-
र्णान् करोतु।

हे भ्रातरो यूयं सद्भावयुक्ताः सर्व्वप्रकारेण ज्ञानेन च सम्पूर्णाः परस्प- १४
रोपदेशे च तत्परा इत्यहं निश्चितं जानामि; तथापि यीशुख्रीष्टस्य १५
सेवको भूत्वा भिन्नदेशिनां समीप ईश्वरस्य सुसंवादं प्रचार्य्य, ते यथा
पवित्रेणात्मना पवित्रनैवेद्यत्वेन ग्राह्या भवन्ति, तन्निमित्तं युष्मान् १६
एतां कथां स्मारयितुम् ईश्वरदत्तानुग्रहानुसारेण प्रगल्भो भूत्वा
लिखामि। यस्माद् ईश्वरे यीशुख्रीष्टेन मम श्लाघाकरणस्य कारणम् १७
आस्ते; वाक्येन क्रियया च, अर्थाद् आश्चर्य्यलक्षणेन चिह्नेन च, अपरम् १८
ईश्वरीयात्मनः प्रभावेन भिन्नदेशिन आज्ञाग्राहिणः कर्त्तुं मया ख्रीष्टो
यानि कर्म्माणि साधितवान् तदन्यस्य कस्यापि कर्म्मणः कथां कथयितुम्
अहं प्रगल्भो न भवामि। तस्माद् आ यिरूशालम इल्लूरिकं यावत् १९
सर्व्वत्र ख्रीष्टस्य सुसंवादं प्राचारयम्। अन्येन निचितायां भित्तौ यथा न २०
निचिनोमि तन्निमित्तं यत्र यत्र स्थाने ख्रीष्टस्य नाम कदापि नाश्रूयत

२१ तत्र तत्र सुसंवादं प्रचारयितुं मदीयेहा समजनि। यादृशं लिखितम् आस्ते

'तदीयातु कथा येषां समीपे न प्रचारिता।
तएव मानवा नूनं परिद्रक्ष्यन्ति निश्चितं।
यैश्च नैव श्रुतं किञ्चिद् बोद्धुं शक्ष्यन्ति ते जनाः।

२२ तस्माद् अहं युष्माकं समीपं जिगमिषु र्वारं वारं बाधितोऽभवम्। किन्त्वि-
२३ दानीम् अत्र प्रदेशे गमनीयस्थानाभावाद् युष्माकं समीपं गन्तुं बहुवत्स-
रान् आरभ्य ममाभिलाषस्य जातत्वाद् यस्मिन् समये स्पानियादेशं प्रति
२४ यात्रां करिष्यामि तस्मिन् समये युष्माकं समीपेन यास्यामि। तस्माद् यथा
युष्माकं साक्षात् पथघटितं भवति, अपरं युष्माभिः सार्द्धम् आलापं
व्यवहृत्य सन्तोषं परिलभ्य यथा गन्तुं युष्माभिरुपकारं प्राप्नोमि, तादृशी
२५ मम प्रत्याशा विद्यते। किन्तु साम्प्रतं पवित्रान् लोकान् सेवितुं यिरूशालम्-
२६ नगरं व्रजामि। यतो माकिदनियादेशीयाखायादेशीया लोका यिरूशा-
लमस्थितानां दरिद्रपवित्रलोकानाम् उपकारनिमित्तं सर्व्वेभ्यः किञ्चि त्
२७ किञ्चित् संगृह्य कियन्ति धनानि दातुम् ऐच्छन्। अपरञ्च त इत्थं
ऐच्छन् इति सत्यं यस्मात् ते तेषां ऋणिनः सन्ति फलतो भिन्नदेशिनो
यदि तैः पारमार्थिकं धनं लभन्ते तर्ह्यैहिकं धनं दत्वा तेषाम् उपकरण म
२८ उचितम्। अतएव तेभ्यस्तत् फलं दत्वा तस्मिन् कर्म्मणि सम्पादिते स्पानि-
२९ यादेशं प्रति यात्राकरणसमये युष्माकं समीपीभूय गमिष्यामि। अपरञ्च
तदा ख्रीष्टस्य सुसंवादसम्बलितं सम्पूर्णम् आशीर्वादं सम्प्राप्य यथा यास्यामि
तत्र मम दृढप्रत्याशा विद्यते।
३० हे भ्रातृगण यथा यिहूदीयदेशस्थानाम् अविश्वासलोकानां हस्तेभ्यो
रक्षितो भवामि, अपरं मदीयैषा सेवा तेषां यिरूशालमस्थितानां पवित्र-
३१ लोकानां समीपे ग्राह्या भवति; अपरम् ईश्वरेच्छया युष्माकं समीपम
३२ आनन्देन गत्वा युष्माभिः सहितः प्राणान् शीतलान् करोमि, एतन्निमित्तं
यूयं मदर्थम् एकमनस ईश्वरस्य सन्निधौ प्रार्थनया यतध्वं, प्रभो र्यीशु

ख्रीष्टस्य नाम्ना पवित्रस्यात्मनः प्रेम्ना च युष्मान् प्रति विनयमेतं करोमि।
शान्तिदायक ईश्वरो युष्माकं सर्व्वेषां सङ्गी भवतु। इति। ३३

---

१६ षोडशोऽध्यायः।

१ पौलस्य फैवीप्रशंसापत्रं बहुरोमिलोकानां नमस्कारश्च १७ तान् प्रति पौलस्योपदेशः २१ पौलस्य सङ्गिलोकानां नमस्कारप्रेषणं २५ मङ्गलनिमित्तम् ईश्वरस्य धन्यवदनञ्च।

किंक्रीयानगरीयधर्म्मसमाजस्य सेविका फैवीनामास्माकं धर्म्मभगिनी १
यदा युष्माकं समीप उपस्थास्यति तदा यूयं तां प्रभुमाश्रितां विज्ञाय
भक्तलोकानां विधिना तदीयातिथ्यं करिष्यथ; तथा तस्याः प्रयोजनानु- २
सारेण युष्मत्तो य उपकारो भवितुं शक्नोति तं करिष्यथ, युष्माकं समीप
एनम् उपरोधं करोमि यस्मात् तया बहूनां विशेषतो मदीय उपकारो
जातः। अपरञ्च ख्रीष्टस्य यीशोः सेवायां मम सहकारिणौ मम प्राण- ३
निमित्तं स्वप्राणान् दातुम् उद्यतवन्तौ यौ प्रिस्किल्लाक्किलौ तौ मम नमस्कारं
ज्ञापयत। तयोः समीपे केवलोऽहं कृतज्ञतां स्वीकरोमीति नहि भिन्न- ४
देशिनां सर्व्वधर्म्मसमाजानां लोका अपि कुर्व्वन्ति। अपरञ्च तयोर्गृहे ५
स्थितधर्म्मसमाजलोकान् मम नमस्कारं ज्ञापयत तथा आशियादेशे
ख्रीष्टस्य पक्षे प्रथमजातफलस्वरूपो य इपेनितनामा मम प्रियबन्धुस्तमपि
मम नमस्कारं ज्ञापयत। अपरं बहुश्रमेणास्माकम् उपकारम् अकरोद् ६
या मरियम् तामपि मम नमस्कारं ज्ञापयत। अपरञ्च प्रेरितानां समीपे ७
ख्यातकीर्त्ती मदग्रे ख्रीष्टाश्रितौ मम ज्ञाती सहबन्दिनौ च आन्द्रनिको
यूनियश्चैतौ मम नमस्कारं ज्ञापयत। तथा प्रभुमाश्रितो मम ८
प्रियतमो य आम्प्लियस्तमपि मम नमस्कारं ज्ञापयत। अपरं ख्रीष्ट- ९
सेवायां मम सहकारिणम् उर्ब्बाणं मम प्रियतमं स्ताखुञ्च मम नम-
स्कारं ज्ञापयत। अपरं ख्रीष्टस्य परमभक्तम् आपिल्लिं मम नमस्कारं वदत १०
आरिष्टबूलस्य परिजनांश्च मम नमस्कारं ज्ञापयत। अपरं मम ज्ञातिं ११
हेरोदियोनं मम नमस्कारं वदत तथा नार्किसस्य परिवाराणां मध्ये ये

१२ प्रभुमाश्रितास्तान् मम नमस्कारं वदत। अपरं प्रभोः सेवायां परिश्रम-
कारिण्यौ त्रुफेनात्रुफोषे नमस्कारं वदत, तथा प्रभोः सेवायाम् अत्यन्तं
१३ परिश्रमकारी यः प्रियः पर्षिस्तं नमस्कारं ज्ञापयत। अपरं प्रभो
१४ र्मनोनीतं रूफं मम धर्म्मभ्रातरं तन्मातरञ्च नमस्कारं वदत। अपरम्
असुन्क्रितं फ्लिगोनं हर्म्मं पात्रवं हर्म्मिम् एतेषां सङ्गिभ्रातृगणञ्च नम-
१५ स्कारं ज्ञापयत। अपरं फिलल्गो यूलिया नीरियस्तस्य भगिनी अलुम्पा
चैतान् एतैः सार्द्धं यावन्तः पवित्रलोका आसते तानपि नमस्कारं ज्ञाप-
१६ यत। यूयं परस्परं पवित्रचुम्बनं कुर्व्वन्तो नमस्कारान् कुरुत ख्रीष्टस्य
धर्म्मसमाजगणो युष्मान् नमस्कारान् ज्ञापयति।
१७ हे भ्रातरो युष्मान् विनीय वदामि यूयं यं इम् उपदेशम् अलभध्वं
तद्विपरीताचरणेन ये विच्छेदं विघ्नञ्च जनयन्ति तान् परिचिनुत तैः
१८ सङ्गिताः किमपि मा व्यवहार्ष्ट। यत एतादृशा लोका अस्माकं प्रभो
र्यीशुख्रीष्टस्य किञ्चिदपि सेवनम् अकृत्वा स्वस्वोदरान् सेवन्ते ; अपरम्
१९ उत्तमकथाभि र्मधुरवाक्यैश्च सरललोकानां मनांसि भ्रमयन्ति। किन्तु
सर्व्वस्मिन् जगति युष्माकम् आज्ञाग्राहित्वस्य प्रकाशितत्वेन युष्मासु
सानन्दो ऽभवं तथापि यूयं यथा सुकर्म्माणि विज्ञाय कुकर्म्माणि न
२० विजानीथेति ममाभिलाषः। तथा सति शान्तिदायक ईश्वरो युष्माकं
पदतलैः शैतानम् अविलम्बं दलितं करिष्यति। अस्माकं प्रभु र्यीशुख्रीष्टो
युष्मान् अनुगृह्णीयात्। इति।
२१ मम सहकारिणस्तिमथि र्लूकियो यासोन् मम ज्ञातिः सोसिपात्र-
२२ श्चेमे युष्मान् नमस्कारान् ज्ञापयन्ति। अपरम् एतत्पत्रलेखकस्तर्तिय-
२३ नामाहमपि प्रभो र्नाम्ना युष्मान् नमस्करोमि। तथा मम धर्म्मसमाज-
सर्व्वलोकानाञ्च आतिथ्यकारी गायो युष्मान् नमस्करोति अपरम्
इरास्तनामक एतन्नगराधिपतिः क्कार्त्तनामक एको भ्राता तावपि
२४ युष्मान् नमस्कुरुतः। अस्माकं प्रभु र्यीशुख्रीष्टो युष्माकं सर्व्वेष्वनुग्रहं
क्रियात्। इति।

आ पूर्व्वकालाद् या निगूढा कथा गुप्तत्वेनासीत् किन्तु सर्व्वदेशीया २५
लोका यया प्रत्ययस्याधीना भवन्ति एतन्निमित्तम् अनादीश्वरस्याज्ञा-
प्रमाणेन भविष्यद्वादिभिर्लिखितवाक्यानुसारेण साम्प्रतं प्रकाशिता भवति; तया २६
प्रकाशितया निगूढकथया, अर्थाद् यीशुख्रीष्टविषयकेन मत्प्रचारित-
सुसंवादेन, यो युष्मान् धर्म्मे सुस्थिरान् कर्त्तुं समर्थस्तादृशो योऽद्वितीयः २७
सर्व्वज्ञ ईश्वरस्तस्य धन्यवादो यीशुख्रीष्टेन सन्ततं भूयात्। इति

---

# करिन्थिनः प्रति पौलस्य प्रथमं पत्रम्।



## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ४ करिन्थीयलोकेष्वनुग्रहजातत्वेन पौलस्य धन्यवादः १० अनैक्यत्वात् तान् प्रति भर्त्सनं १७ सुसंवादीयगुणानां प्रशंसा २६ तेनाज्ञानक्षुद्रलोकानां परित्राणं ईश्वरस्य महिम्नः प्रकाशितत्वञ्च।

ख्रीष्टयीशुना शुचीकृता आहूताः पवित्राः करिन्थनगरस्थिता १
ईश्वरस्य धर्म्मसमाजलोका अन्यस्थानस्थाश्च ये सर्व्वे लोका अस्माकं तेषाञ्च
प्रभो र्यीशुख्रीष्टस्य नाम्ना प्रार्थयन्ते तान् प्रतीश्वरेच्छया यीशुख्रीष्टेना- २
हूतः प्रेरितश्च पौलः सोस्थिनिनामा भ्राता च पत्रं लिखति। अस्माकं ३
पितेश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मभ्यम् अनुग्रहं शान्तिञ्च कुर्य्यात्।

ईश्वरो यीशुख्रीष्टेन युष्मास्वनुग्रहं कृतवान् तस्मादहं युष्मन्निमित्तं ४
सन्ततं ममेश्वरस्य धन्यवादं करोमि। युष्माकं मध्ये ख्रीष्टविषयकं साक्ष्यं ५
यद्वत् सप्रमाणम् अभवत्, तद्वत् यूयमपि ख्रीष्टेन वक्तृताज्ञानप्रभृतिभिः ६
सर्व्वगुणै र्गुणवन्तो जाताः। अतएवास्माकं प्रभुयीशुख्रीष्टस्य पुनरा- ७
गमनापेक्षिणां युष्माकं कस्यापि दानस्य न्यूनता नास्ति। अपरम् अस्माकं ८
प्रभो र्यीशुख्रीष्टस्य दिवसे यथा यूयं निर्द्दोषा भवथ इत्यभिप्रायेण स
शेषदिनपर्य्यन्तं युष्मान् धर्म्मे सुस्थिरान् कृत्वा स्थापयिष्यति। यत ९

य ईश्वरः स्वपुत्रस्यास्माकं प्रभो र्यीशुख्रीष्टस्य सहायताप्राप्तये युष्मान्
आहूतवान् स विश्वास्यः।
१० हे भ्रातरो युष्माकं यथा परस्परं कथाया ऐक्यं तिष्ठति कोऽपि
भिन्नभावो न जायते; अपरं यथा यूयम् एकमनस, एकमन्त्रणाश्च
संयुक्ता भवथ तन्निमित्तम् अस्माकं प्रभो र्यीशुख्रीष्टस्य नाम्ना युष्मान्
११ विनयेऽहम्। हे मम भ्रातरो युष्माकं मध्ये यथा परस्परं विचारो जायते
१२ क्लोयीनाम्नः परिजनैस्तस्य वार्त्ताम् अश्रौषम्। इत्यहं कथयामि युष्माकं
कश्चित् कथयति पौलस्य शिष्योऽहम्;अपरे केचिद् वदन्ति वयम् आपल्लोः,
तदन्ये केचिद् वदन्ति वयं कैफाः,(अर्थात् पितरस्य);अपरे केचिद् वदन्ति
१३ वयं ख्रीष्टस्य। ख्रीष्टः किं भिन्नोऽभवत्? पौलः किं युष्मन्निमित्तं क्रुशे हतो
१४ ऽभवत्?अपरं पौलस्य नाम्ना यूयं किं मज्जिता जाताः?अहं क्रीस्पगायौ विना
युष्माकं मध्ये कमप्यपरं मज्जितं नाकरवम् एतस्माद् ईश्वरं धन्यं वदामि
१५ एतेनाहं स्वनाम्ना मज्जनं कारयामि, एतां कथां कोपि वक्तुं न शक्नोति।
१६ अपरं स्तिफानस्य परीवारान् मज्जितान् अकरवम् एतद्भिन्नं कञ्चन मज्जितं
कृतवान् इति न जानामि।
१७ अपरञ्च ख्रीष्टो मां मज्जयितुं न प्रेर्य्य सुसंवादं प्रचारयितुं प्रेरितवान्;
तदपि वाक्पटुतया नहि, तथा सति क्रुशे हतस्य ख्रीष्टस्य प्रचारो विफलो
१८ भवति। यतस्तस्य क्रुशविषयकाख्यानि त्राणहीनलोकानां निकटे प्रलापमात्रे
सत्यपि त्राणस्य पात्राणि ये वयं तेषामस्माकं निकटे ईश्वरस्य शक्तिस्वरूपं
१९ भवत्येव। अपरम् इत्थं लिखितम् आस्ते

'अहं ज्ञानवतां ज्ञानं नाशयिष्यामि निश्चितम्।
विवेकिनां विवेकञ्च करिष्यामि निरर्थकं।'

२० ज्ञानी कुत्र? विद्वान् वा कुत्र? अपरम् एतज्जगतो विवादकारिणो कुत्र?
२१ एतज्जगतस्सम्बन्धीयं ज्ञानम् ईश्वरः किम् अज्ञानरूपं नाकरोत्? ईश्वरस्य
विवेकमया जगतो लोका ईश्वरस्य तत्त्वबोधं प्राप्तुम् अशक्तास्ततः प्रचारित-
ज्ञानवाक्येन विश्वासिनां परित्राणं सिद्धं कर्त्तुम् ईश्वरस्य तुष्टि र्बभूव।

यिहूदीयलोका लक्षणं दिदृक्षन्ति भिन्नदेशीयलोकास्तु विद्यायाः २२
प्रयासं कुर्व्वन्ति; एतत्कारणात् क्रुशे हतोऽस्माभिः प्रचारितो यः ख्रीष्ट- २३
स्तस्याख्यानमेव यिहूदिनां विघ्नस्वरूपं भिन्नदेशिनां समीपे चाज्ञानस्वरूपं
भवति। तथापि यिहूदी भवतु भिन्नदेशी वा भवतु सर्व्वेषाम् आहूतानां २४
समीपे ख्रीष्ट ईश्वरस्य शक्तिरूप ईश्वरस्य ज्ञानरूपश्च भवति। ईश्वरस्य २५
चेद् अज्ञानता तर्हि सा मनुष्यगणाद् अधिकज्ञानवती; ईश्वरस्य चेद्
दुर्ब्बलता तर्हि सा मनुष्यगणाद् अधिकबलवती भवति।

हे भ्रातर आहूतानां युष्माकं मध्ये संसारस्यास्य विद्वान् वा महालोको २६
वा कुलीनो वा प्रायशो बहवो न विद्यन्ते यूयम् एतत् पश्यथ। यत २७
ईश्वरो विद्वल्लोकान् लज्जयितुं मूर्खलोकान् मनोनीतान् अकरोत्; अपरं
बलिनो लोकान् लज्जयितुं दुर्ब्बललोकान् मनोनीतान् अकरोत्। तथा २८
वर्त्तमानलोकानां गर्व्वं खर्व्वं कर्त्तुम् अपकृष्टान् हेयान् अवर्त्तमानांश्च
लोकान् मनोनीतान् अकरोत्। तत ईश्वरस्य साक्षात् कोपि प्राणी नात्मानं २९
श्लाघितुं शक्नोति। किन्तु योऽस्मन्निमित्तम् ईश्वरेण ज्ञानपुण्यपवित्रत्व- ३०
मुक्तिस्वरूपोऽभवत् ईश्वरस्यानुग्रहाद् यूयं तस्मिन् ख्रीष्टे यीशौ विद्यध्वे।
अतएव यादृशं लिखितम् आस्ते

३१ 'मानवः श्लाघते यस्तु श्लाघतां स परेश्वरम्।'

---

२ द्वितीयोऽध्यायः।

१ पौलस्य सुसंवादप्रकाशनं वाक्पटुताया विद्यायाश्च निपुणत्वान् न जातं ६ किन्तु सांसारिकज्ञानात् श्रेष्ठं यद् ईश्वरीयज्ञानं तेन सुसंवादप्रचारणञ्च।

हे भ्रातरो यदेश्वरेण दत्तं साक्ष्यं प्रचारयितुं युष्माकं समीपम् १
आगच्छं तदा वाक्पटुताया विद्याया वा नैपुण्येन नागच्छम्; किन्तु २
यीशुख्रीष्टस्य कथा तस्य क्रुशे हतत्वस्य कथा चैतद्भिन्नां काञ्चन कथां
युष्माकं साक्षात् न ज्ञापयितुं मनसि निश्चितवान्। अपरञ्च दुर्ब्ब- ३
लतया भीत्या कम्पेनेन च संयुज्यमानोऽहं युष्माभिः सार्द्धम् आसम्।
अपरं युष्माकं विश्वासो मानवस्य केनापि कौशलेन न स्थापितः सन् ४
केवलेश्वरस्य शक्त्या स्थापितो भवति, एतदर्थं मम कथोपकथनं सुसंवाद- ५

प्रचारणञ्च सांसारिकविद्याया मनोहरवाक्ययुक्तं न सत् पवित्रस्यात्मनः
प्रमाणशक्तिभ्यां युक्तम् आसीत्।
६ ये जनाः सिद्धास्तेषां समीपे ऽस्माकं कथा ज्ञानस्य कथा भवति किन्तु
तद् एतज्जगतो जनानाम् एतज्जगत्सम्बन्धीयानाम् नश्वराधिपतीनाञ्च
७ सदृशं ज्ञानम् इति नहि; किन्त्वस्माकं विभवजनकं यन्निगूढज्ञानं जगत्-
सृष्ट्यारम्भात् पूर्व्वम् ईश्वरो निरूपयामास तस्य गुप्तज्ञानस्य कथां वयं
८ कथयामः। किन्तु सांसारिकानाम् अधिपतीनां मध्ये कोप्येतज्ज्ञानस्य
परिचयं न लब्धवान् यतस्तं यद्यलप्स्यत तर्हि तेजःपुञ्जस्वरूपो यः प्रभु-
९ स्तं क्रुशे नाहनिष्यत्। यथा लिखितम् आस्ते

'ये कुर्व्वन्तीश्वरे प्रेम कृते तेषान्तु तेन यत्।
सञ्चीकृतं न तत् कोपि काापि नेत्रेण दृष्टवान्।
श्रुतवान् न च कर्णेन प्राविशत् तच्च नो मनः।'

१० किन्त्वीश्वरः स्वात्मना तद् अस्माकं साक्षात् प्राकाशयत्; यत
११ आत्मा सर्व्वम् अनुसन्धत्त ईश्वरस्य मर्म्मवाक्यानि च। मनुजानां
मनोगताः कथा मनुजानाम् आत्मानं विना को ज्ञातुं शक्नोति?
तद्वद् ईश्वरसम्बन्धीयां कथाम् ईश्वरस्यात्मानं विना कोप्यन्यो ज्ञातुं न
१२ शक्नोति। तस्माद् ईश्वरोऽस्मान् अनुगृह्य यमुपदेशम् अकरोत् तं यथा
बोद्धुं शक्नोमि तन्निमित्तं वयं सांसारिकम् आत्मानम् अप्राप्य, ईश्वरस्या-
१३ त्मानम् प्राप्नुम। तस्मात् सांसारिकज्ञाने शिक्षितवाक्येन न कथयित्वा
पारमार्थिककथया पारमार्थिकम् उपदिश्य पवित्रेणात्मना शिक्षितवाक्येन
१४ तां कथां कथयामि। किन्तु सांसारिको मानुष ईश्वरस्यात्मसम्बन्धीयम्
उपदेशं मूढत्वस्वरूपं विज्ञाय न गृह्णाति तस्य तत्त्वमपि बोद्धुं न
१५ शक्नोति यस्मात् केवलेन पारमार्थिकज्ञानेन स बोध्यो भवति। यो जनः
१६ पारमार्थिकः स सर्व्वं जानाति किन्तु तं कोपि न जानाति। यतः क
ईश्वरस्य मनोगतां कथां ज्ञात्वा तम् उपदेष्टुं शक्नोति? किन्तु ख्रीष्टस्ये-
वास्माकं ज्ञानम् आस्ते।

## ३ तृतीयोऽध्यायः।

१ सांसारिकत्वे भर्त्सनं ५ प्रभुं विना सेवकस्य कर्म्मणो मुधात्वं १६ प्रभो र्लोका ईश्वरस्य मन्दिरस्वरूपास्तेषां शुचित्वकतत्त्वयोरावश्यकता च।

हे भ्रातरो यूयं सांसारिका: ख्रीष्टधर्म्मे च शिशुवत् तस्माद् यथा १
पारमार्थिकान् तथा युष्मान् वक्तुं नाशक्नवम्। युष्मान् कठोरद्रव्यं न भोज- २
यित्वा दुग्धमपाययम्; यतो यूयं पूर्व्वं तद् ग्रहीतुम् अशक्ता आस्त
तथा युष्माकं सांसारिक्या बुद्धेः स्थितत्वाद् यावद् अद्यसमर्था आध्वे।
यस्माद् युष्माकं मध्ये मात्सर्य्यानैक्यविवादादय इदानीमप्यासते तस्माद् ३
यूयं किं सांसारिका न भवथ? मानुषाइव किं नाचरथ? युष्माकं ४
कश्चिद् वदति, पौलस्य शिष्योऽहम्; कश्चिद् वदति, अहम् अपल्लोःशिष्यः
तर्हि यूयं किं सांसारिका न भवथ?

पौलः कः? अपल्लो र्वा कः? तौ सेवकमात्रौ युष्माकं विश्वासजनकौ ५
यथा प्रभुरेकैकजनाय फलं ददाति। अहं रोपितवान् अपल्लोस्तु ६
जलम् असेचत् किन्त्वीश्वरस्तम् अवर्द्धयत्। अतएव रोपयितृसेक्तारावुभौ ७
न सारौ वृद्धिदाता य ईश्वरः सएव सारः। अपरं रोपयितृसेक्त्रोर्द्वयोरैक्यं ८
किन्तु यो यादृशं कर्म्म करिष्यति स तादृशं निजफलं लप्स्यते। यत ९
आवाम् ईश्वरेण सह कर्म्मकारिणौ यूयम् ईश्वरस्य क्षेत्रस्वरूपा निचेतृस्व-
रूपाश्च जाताः। अहम् ईश्वराद् यादृशम् अनुग्रहम् अलभे तदनुसारत १०
एको निपुणो निचेतेव भित्तिमूलम् अस्थापयम् तदुपरीतरे निचि-
न्वन्ति किन्तु कथं निचिन्वन्ति तत्र सर्व्वे सावधाना भवन्तु। यतो ११
यीशुख्रीष्टरूपं यद् भित्तिमूलं स्थापितमस्ति तद्भिन्नं कोपि किम-
प्यपरं भित्तिमूलं स्थापयितुं न शक्नोति। किन्त्वेतद्भित्तिमूलोपरि यदि १२
कोपि स्वर्णरूप्यरत्नकाष्ठतृणनालीप्रभृतिना येन केनापि वस्तुना निचि-
नोति तस्य निचयनं यादृक् तादृशं प्रकाशिष्यते। वस्तुतो यस्य यादृशं १३
निचयनं विचारदिवसे वह्निना तत् प्रकाशिष्यते, अर्थाद् एकैकजनस्य
यादृशं कर्म्म तस्य परीक्षा वह्निना भविष्यति। किन्तु तदुपरि यस्य जनस्य १४

१५ निचयनं स्थास्नु भविष्यति स पारितोषिकं प्राप्स्यति। अपरं यस्य जनस्य
निचयनं दग्धं भविष्यति तस्यैव हानि र्भविष्यति किन्तु वह्नेे र्निर्गतजन
इव स स्वयं रक्षितो भविष्यति।

१६ यूयम् ईश्वरस्य मन्दिरस्वरूपा ईश्वरस्यात्मा युष्माकम् अभ्यन्तरे
१७ निवसति चेति किं न जानीथ? ईश्वरस्य मन्दिरं यः कश्चित् नाशयति
तम् ईश्वरो नाशयिष्यति यत ईश्वरस्य मन्दिरं पवित्रं यूयन्तु तन्मन्दिर-
१८ रूपा भवथ। कोपि स्वं न भ्रमयतु युष्माकं कश्चन यदि सांसारिकेन
१९ ज्ञानेन ज्ञानवान् भवति तर्हि स ज्ञानी भवितुं मूढमन्यो भवतु। यस्माद्
एतस्य संसारस्य यज्ज्ञानं तद् ईश्वरस्य सन्निधौ अज्ञानस्वरूपम् एतस्मिन्
लिखितमप्यास्ते

'नैपुण्येनैव तेषां स बध्नाति ज्ञानिनो जनान्।'

२० पुनश्च। 'ज्ञानिनां कल्पनां वेत्ति परमेशो निरर्थिकाम्।'

२१ अतएव कोपि मनुजो मनुजान् न श्लाघतां यतः सर्व्वैपि युष्माकं
पौलो वा अपल्लो वा कैफा वा जगद् वा जीवनं वा मरणं वा
२२ वर्त्तमानो वा भविष्यद् वा सर्व्वएव युष्माकं, यूयञ्च ख्रीष्टस्य, ख्रीष्ट
ईश्वरस्य।

---

४ चतुर्थोऽध्यायः।

ख्रीष्टस्य सेवकानां भाण्डागाराध्यक्षत्वं ६ तेषां दुःखं ताडना च १४ तेषामनुगा-
मित्वस्यावश्यकत्वं १८ करिन्थिनः प्रति पौलस्य शासनवाक्यानि च।

१ लोका अस्मान् ईश्वरस्य निगूढवाक्यस्य भाण्डागाराधिपतीन्स्वरूपान्
२ ख्रीष्टस्य सेवकांश्च जानन्तु। किन्तु भाण्डागाराधिपति र्येन विश्वसनी-
३ यो भवति तस्यावश्यकत्वम्। इतरच्च युष्माभिः कैश्चित् मनुष्यै र्वा यदहं
विचारितो भवामि तदतीव लघु बुध्ये स्वस्य विचारकः स्वयं नाहं भवामि।
४ अहं स्वं दोषिणं न करोमि किन्तु तेनाहं निर्दोषो न भवामि यः प्रभुः
५ सएव मम विचारयिता। अतएव तिमिरे स्थिताः सर्व्वा गुप्तकथा आलो-

केन प्रकाशिताः करिष्यति तथा मनसः सर्व्वा गुप्तमन्त्रणा व्यक्तीकरिष्यति
यः प्रभुस्तस्यागमनसमयात् पूर्व्वं कमपि विचारं मा कार्ष्ट ; यस्मात् तस्मिन्
समय ईश्वरात् सर्व्वेषां प्रशंसा भविष्यति।

हे भ्रातरो यूयम् अस्माभिः शिक्षिताः सन्तो विधिम् अतिक्रम्य ६
कमपि यथा श्रेष्ठं न मन्यध्वे, अपरम् एकस्य सपक्षा इतरस्य विपक्षा भूत्वा
यथाभिमानिनो न भवथ, तन्निमित्तं युष्माकं मङ्गलं चिन्तयित्वा तत्राहं
स्वम् अपल्लवञ्च निदर्शनस्वरूपं कृतवान्। अन्येभ्यः कस्त्वां विशेषं करोति? ७
अपरं तुभ्यं यन्न दत्तं तादृशं किमास्ते? तस्माद् अन्यस्माद् यदि लब्धं
तर्हि निजं वस्तु मत्वा कुत आत्मानं श्लाघसे? युष्माकं कस्यापि वस्तुनो ८
ऽभावाभावाद् यूयं सम्पूर्णधनवन्तो भूत्वास्माकम् अविद्यमानत्वे राजत्वं
कुरुथ यूयं यत् राजत्वं कुरुथ तदहं वाञ्छामि तेन वयमपि युष्माकं
राजत्वस्य भागिनो भवितुं शक्नुमः। ये वयं प्रेरितास्तान् अस्मान् मुमूर्षु- ९
लोकवत् शेषान् कृत्वा सर्व्वेषाम् अर्थात् स्वर्गीयदूतानां मानवानाञ्च कौतु-
कास्पदानि कृत्वा ईश्वरो नियुक्तवान्। ख्रीष्टनिमित्तं वयं मूढाः किन्तु १०
यूयं ख्रीष्टेन ज्ञानिनः, तथा वयं दुर्ब्बलाः किन्तु यूयं सबलाः, अपरं यूयं
सम्मानिताः किन्तु वयम् अपमानिताः। वयम् अद्य यावत् क्षुधार्त्ता- ११
स्तृष्णार्त्ता वस्त्रहीनाः प्रहता आश्रमरहिताः सन्तः स्वहस्तैः परिश्राम्यामः।
अपरञ्च वयं भर्त्सिताः सन्तः आशिषं वदामस्ताडिताः सन्तश्च सहामहे १२
निन्दिताः सन्तश्च विनयामहे। वयम् अद्य यावत् जगतो मलत्वेन १३
सर्व्वमलराशिस्वरूपत्वेन च गणिता भवामः।

युष्मान् त्रपयितुम् एताः कथा लिखामीति नहि किन्तु प्रियपुत्रान् १४
इव युष्मान् प्रबोधयामि। यतः ख्रीष्टस्य धर्म्मे यदि युष्माकं दशसहस्राण्युप- १५
देष्टारो भवन्ति तथापि युष्माकम् तातम् एककं विना बहवो न भवन्ति;
अहं ख्रीष्टस्य यीशोः सुसंवादेन युष्मान् अजनयम्। तस्माद् युष्मान् विनीय १६
लिखामि यूयं मदनुगामिनो भवत। एतदभिप्रायेण प्रभौ विश्वासी मम १७
प्रियपुत्रो यस्तिमथियस्तं युष्माकं समीपं प्रेषितवान् ख्रीष्टस्य विधिप्रमा-

येन मम यादृश आचारो व्यवहरणञ्च, अपरं यथा सर्व्वेषु धर्म्मसमाजेषु
सर्व्वत्र चोपदिशामि तत् स युष्मान् स्मारयिष्यति।
१८ अपरम् अहं युष्माकं समीपं न गमिष्यामि, इति बुद्ध्वा युष्माकं किय-
१९ न्तो लोका अभिमन्यन्ते। किन्तु यदि प्रभोरिच्छा भवति तर्हि युष्माकं
समीपम् अविलम्बम् उपस्थाय तेषाम् अहङ्कारिलोकानां केवलस्य
२० कथाकथनस्य नहि क्रियाकरणस्यापि सामर्थ्यं ज्ञास्यामि। यस्माद्
२१ ईश्वरस्य राजत्वं कथाकथनेन नहि किन्तु सामर्थ्येन। अपरञ्चाहं किं
युष्माकं समीपं दण्डेन यास्यामि वा प्रेमनम्रताभ्यां? तत्र युष्माकम्
इच्छा का?

---

५ पञ्चमोऽध्यायः।

१ एकजनस्य महापातकं ६ पुरातनकिण्वरूपं दुष्टत्वं त्यक्तुम् उपदेशः ९ महा-
पातकिनो भ्रातुः पृथक्करणस्य कथा च।

१ अपरञ्च देवपूजकानां मध्येऽपि यथा व्यभिचारनाम नाश्रूयत तथा
व्यभिचारो युष्माकं मध्ये आस्ते, फलतो युष्माकम् एको जनो विमातृगमनं
२ करोति, एतस्याः कथायाः सर्व्वत्र जनरवो जायते। तेन तादृशे दुष्कर्म्मणि
कृतेऽपि यूयं खेदम् अकुर्व्वाणास्तं समाजाद् वहिरकृत्वा किं दर्पं कुरुथ?
३ यो जन एतद् दुष्कर्म्म कृतवान् अहं शरीरेण दूरस्थितोऽपि आत्मना
समीपस्थितः सन् उपस्थितजन इव तस्मिन् एतादृशं विचारं कृतवान्,
४ यूयम् अस्माकं प्रभो र्यीशुख्रीष्टस्य नाम्ना मदीयात्मना सह मिलित्वा
अस्माकं प्रभुना यीशुख्रीष्टेन दत्तया शक्त्या प्रभो र्यीशो र्विचारस्य दिने
५ तस्य जनस्यात्मा यथा परित्रातो भविष्यति, तन्निमित्तं तस्य शरीरे दुःख-
भोगार्थं शैतानो हस्ते तं जनं समर्पयत।
६ युष्माकम् इत्थं दर्पकरणम् भद्रं नहि यस्माद् अल्पकिण्वेन सर्व्वगोधूम-
७ चूर्णं किण्वमयं भवति, एतत् किं यूयं न जानीथ? तस्माद् यूयं यथा
नवीनपिष्टकस्वरूपा भवथ तदर्थं पुरातनं किण्वं दूरीकुरुत ततो यूयं
किण्वयुक्ता न भविष्यथ, अपरं निस्तारोत्सवस्य मेषरूपो यः ख्रीष्टः स

युष्माभिर्मिन्तं बलीकृतोऽभवत्। अतएव पुरातनकिण्वस्य पूपेन, अर्थाद् ८
दुष्टताजिघांसारूपेण किण्वेन न कृत्वा वयं किण्वशून्याभ्यां सरलता-
सत्यतारूपाभ्यां पूपाभ्याम् उत्सवं पालयामः।

यूयं व्यभिचारिप्रभृतिभि र्लोकैः सार्द्धम् भोजनादि मा कार्ष्ट कथा- ९
मिमां युष्मान् प्रति पत्रे लिखितवान्; किन्तु व्यभिचारिणो लोभिनो १०
दुर्वृत्ता देवार्चका इत्यादिभिः सांसारिकै र्लोकैः सौकं सर्व्वथा व्यवहर्त्तुं
न्यषेधम् इति नहि, यस्मात् तथा कृते संसारस्य वहिर्गतेन भवितव्यम्।
किन्तु कश्चिज्जनो यदि भ्रातृत्वेन विख्यातः सन् व्यभिचारी लोभी ११
देवार्चको निन्दको मत्तो दुर्वृत्तो वा भवति तर्हि तादृशेन लोकेन सह
भोजनं मा कार्ष्ट व्यवहरणञ्च मा कार्ष्ट, इदानीम् एतन्माचम् अलेखिषम्।
अन्यथा ये जना समाजस्य वहिर्भूतास्तेषां विचारं कर्त्तुं मम कोऽधिकारः? १२
अपरञ्च यूयं समाजान्तर्भूतानां लोकानां विचारं किं न करिष्यथ?
वहिर्भूतानां लोकानां विचारम् ईश्वरः करिष्यति, तस्मात् स्वेषां समी- १३
पात् तं पापिष्ठं जनं दूरीकुरुत।

---

६ षष्ठोध्यायः।

१ आवेदननिमित्तं करिन्थिनः प्रति पौलस्य भर्त्सनं ९ ईश्वरस्य राज्ये पापि-
लोकानाम् अनधिकारः १२ पवित्रताया आवश्यकता च।

युष्माकम् एको जन इतरजनकारणाद् आवेदनं कर्त्तुम् उद्यतश्चेत् १
तर्हि पवित्रलोकानां विचारेण निष्पत्ति नै भूत्वा किम् अधार्म्मिक-
लोकानां विचारेण निष्पत्ति र्भविष्यति? पवित्रा लोका जगतो जनानां २
विचारं करिष्यन्तीति यूयं किं न जानीथ? अपरं जगतो जनानां
विचारं कर्त्तुं यदि युष्माकम् अधिकारस्तिष्ठति तर्ह्येतम् अतिक्षुद्रं
विचारं कर्त्तुं यूयं किं न योग्याः? अपरञ्च वयं भूतगणस्यापि विचारं ३
करिष्याम एतदपि किं न जानीथ? तर्हि किम् एतस्याः सांसारिककथाया
विचारं न करिष्यामः? तस्माद् युष्माकं मध्ये सांसारिक्याः कथायाः ४
कस्मिंश्चिद् विवादे समुपस्थिते तं विचारयितुं समाजे क्षुद्रत्वेन

५ गणिता ये लोकास्तान् नियुङ्ग्ध्वं । अहं युष्माकं त्रपायाः कथामेकां
कथयामि, निजभ्रातृ विवादभञ्जनाय विचारयितुं समर्थो युष्माकम्
६ एकोऽपि बुद्धिमान् लोकः किं न विद्यते? एतत्कारणात् किम् एको भ्रात-
७ तरं भ्रातरम् अविश्वासिनां लोकानामपि सन्निधौ समपवदते? यूयं
परस्परम् अपवदथ, इति युष्माकं महान् दोषः ; यूयं कुतोऽन्यायं न
८ सहध्वे? कुतः क्षतिं नाङ्गीकुरुथ? किन्तु यूयं तन्न कृत्वा निजभ्रातृन् प्रत्य-
न्यायं तेषां क्षतिञ्च कुरुथ।

९ अपरम् ईश्वरस्य राज्येऽधार्म्मिकानां लोकानाम् अधिकारो नास्ति,
१० एतद् यूयं किं न विद? मा वञ्च्यध्वं, ये व्यभिचारि
देवार्च्चिपरस्त्रीगामिस्त्रीवदाचारिपुंमैथुनचारिणो भिमर्दिदुर्मुखिदुर्ष्टैत्ति-
११ नस्ते ईश्वरस्य राज्यं नाधिकरिष्यन्ति । युष्माक मध्येऽपि कतिपया एता-
दृशा आसन् किन्त्वस्माकं प्रभुयीशो र्नाम्ना पुण्यत्वेन गणिताः सन्त
ईश्वरस्यात्मना यूयम् अवनिक्ताः पवित्रीकृताश्च भवथ।

१२ मामभि सर्व्वं द्रव्यं प्रतिषिद्धं नहि किन्तु सकलमेवमङ्गलं न जनयति
यद्यखिलं मामभि न प्रतिषिद्धं तथापि कस्यापि द्रव्यस्य निघ्नीभूय न
१३ स्थास्यामि। आहारनिमित्तको जठरो जठरनिमित्तकश्चाहारः किन्त्वी-
श्वर उभौ नाशयिष्यति; अपरम् आस्माकीनः कायो व्यभिचारप्रयोजनको
१४ नहि किन्तु प्रभुप्रयोजनकः तथा प्रभुरस्मदीयवपुःप्रयोजनकः। तस्माद्
ईश्वरो यद्वत् श्मशानात् प्रभुम् उदस्थापयत तद्वत् स्वीयपराक्रमेणास्मान-
१५ प्युत्थापयिष्यति। अपरञ्च युष्माकं कायाः ख्रीष्टस्याङ्गस्वरूपा इति किं
युष्माभि र्न ज्ञायते? तर्हि ख्रीष्टीयाङ्गम् आदाय किं वेश्याङ्गस्वरूपं
१६ करिष्यामि? एतादृशं मा भूयात्। यतो वेश्याङ्गेनाङ्गस्वञ्जने सति
द्वावेकाङ्गौ भवतः, एतत् किं यूयं नो जानीथ? यस्माद् ईश्वरो व्याजहार
१७ द्वावेकाङ्गौ भविष्यतः। तद्वद् यो जनः प्रभुम् आश्रयते स प्रभुना सार्द्धम्
१८ एकात्मा जायते तस्माद् व्यभिचारकर्म्मणो दूरे तिष्ठत। मानवा यान्य-
न्यानि कलुषाणि कुर्व्वन्ति तैस्तेषां वपूंषि न लिप्यन्ते किन्तु येन केनचिद्

व्यभिचारकर्म्म क्रियते तेन निजविग्रहस्य विरुद्धं कल्मषं क्रियते। युष्मा- १९
भिरीश्वरात् प्राप्तस्यान्तःस्थितस्य पवित्रस्यात्मनो निकेतनस्वरूपा युष्माकं
विग्रहा एतत् किं युष्माभि र्न ज्ञायते? यूयं स्वयं स्वेषां न भवथ यस्मात् २०
विशेषेण मूल्येनाक्रीयध्वम् अत ईश्वरस्य यानि युष्माकं वपूंष्यात्मानश्च
तदुभयाभ्याम् तस्य महिमा प्रकाश्यताम्।

---

७ सप्तमोऽध्यायः।

१ उद्वाहीया कथा, ८ स्त्रीपुंसयोरपृथक्त्वायाः कथा १२ सहवासस्य कथा १७ निजनिजपदे स्थितिकथा २५ अनूढस्य स्थितिकथा ३६ कन्याया विवाहकथनं ३९ स्त्रियाः द्विर्विवहनकथनं।

अपरञ्च युष्माभि र्मां प्रति यत् पत्रम् अलेखि तस्योत्तरम् एतत्, १
स्त्रीणामस्पर्शनं क्षेमं; किन्तु व्यभिचारनिवृत्त्यर्थम् एकैकस्य पुंसः स्वीकास्वैका २
भार्य्या भवतु, अपरम् एकैकस्या योषाया एकैकः पति र्भवतु। अपरञ्च पति ३
र्भार्य्यया सहितो भार्य्या च पत्या सहिता परस्परम् उचितं प्रियं कुर्य्यात्।
तच्च योषायाः स्वीये काये स्वाधिकारो नास्ति किन्तु पत्युः, तद्वत् पत्युः ४
स्वीये वपुषि स्वस्याधिकारो नास्ति किन्तु योषाया अधिकारः।
उपोषणप्रार्थनयोरवकाशप्राप्त्यर्थम् एकमन्त्रणा भूत्वा कियत्कालं पृथक् ५
स्थातुं शक्नुथ, एतदन्यच्च युष्माकम् एकोऽन्यजनं न वञ्चयेत्; पश्चाद्
इन्द्रियाणाम् अधैर्य्यात् शैतान् यथा युष्मान् परीक्षायां न क्षिपति
तदर्थं समागत्य पुनरेकस्मिन् स्थाने मिलत। एतद् आज्ञया नहि किन्तु ६
मन्त्रणया कथयामि। यतः सर्व्वे मर्त्त्या मादृशा भवन्त्विति ममाकाङ्क्षा ७
किन्तु सर्व्वो जनः कश्चिदेकप्रकारं कश्चिच्चान्यप्रकारम् ईश्वरेण दत्तं
दानम् अलभत।

नारीरहितान् पुंसः प्रति विधवाः प्रति च ममादो निवेदनं ते यदि ८
अहमिव स्थातुं शक्नुवन्ति तर्हि भद्रमेव; किन्तु यदि न शक्नुवन्ति तर्हि ९
विवहन्तु यतो कामदहनाद् उद्वहनं भद्रम्। पुनरपि कृतोद्वाहान् १०
लोकान् आज्ञापयामि केवलोऽहं कथयामीति नहि किन्तु प्रभुरपि समा-

११ दिशति। भार्य्या स्वपतिं न जह्यात् किन्तु यदि जह्यात् तर्हि सा
पुनरव्यूढा तिष्ठेत् वा स्वीयपतिना सार्द्धं पुनर्मिलेत्, तद्वत् पतिरपि
जायां नो जह्यात्।
१२ इतरान् जनान् प्रति प्रभु र्नावोचत् किन्त्वहं ब्रवीमि, कस्यचन भ्रातु
र्भार्य्यायाम् अविश्वासिन्यां सत्यामपि यदि सा पत्या सह वस्तुं वाञ्छति
१३ तर्हि तां न दूरीकुर्य्यात्। तद्वत् कस्याश्चन योषितः पत्यावविश्वासिनि सत्यपि
यदि भार्य्यया सह वस्तुं वाञ्छति तर्हि सा तं स्वामिनं न परित्यजेत्।
१४ यस्मात् स्वाम्यविश्वास्योऽपि विश्वासिन्या जायया शुचित्वं लभते तद्वद्
अविश्वासिनी जाया विश्वासिना स्वामिना शुचित्वं लभते, एतत्कारणाद् युष्मा-
कम् अपत्यानीदानीं शुचीनि भवन्ति नो चेत् तान्यशुचीन्यभविष्यन्।
१५ अपरम् अविश्वासी जनो यदि विहाय व्रजति तर्हि व्रजतु तस्माद् भ्राता
भगिनी वा कश्चिदप्येतेन कर्म्मणा न बध्यते तथापि वयं निर्व्विरोधं
१६ स्थातुम् ईश्वरेण समाहूतामहे। हे योषित् त्वं स्वस्वामिनः परित्राण-
कारणं भवितुं शक्ष्यसि वा नेति किं वेत्थ? तथा हे पुमन् त्वं निजपत्न्याः
परित्राणकारणं भवितुं शक्ष्यसि वा नेति किं वेत्थ?
१७ अपरञ्चेश्वरो भागानुसारतो यस्मै यादृशं दानम् अददात् ये च
यादृश्यामवस्थायां स्थित्वा प्रभुना समाहूता अभवन् ते तादृश्या रीत्या
समाचरन्तु, अनेन प्रकारेणाहं सर्व्वाभ्यो मण्डलीभ्यो व्यवस्थां वितरामि।
१८ वस्तुतस्तु कश्चन जनो यदि त्वक्छेदी भूत्वाहूतो भवति तर्हि सोऽत्वक्छेदी
१९ मा भवतु। त्वक्छेदः सारो नहि त्वक्छेदाभावोऽपि नो किन्त्वीश्वरस्य याज्ञा
२० तत्पालनमेव। अतएव यो जनो यस्मिन् पदे तिष्ठन् आहूतो भवति स
२१ तस्मिन्नेव पदे तिष्ठेत्। यदि त्वं दासः सन् आहूतो भवसि तर्हि किमपि मा
२२ चिन्तय किन्तु यदि मुक्तो भवितुं शक्नोषि तर्हि मुक्तो भव। यतो यो
जनो दासो भूत्वा प्रभुनाहूतो भवति स प्रभुना मुक्तो मानवः; यस्तु जनो
२३ मुक्तो भूत्वाहूतो भवति सोऽपि ख्रीष्टस्य किङ्करः। यूयं मूल्येन क्रीता
२४ आता अतएव कस्यापि मनुष्यस्य दासा मा भवत। हे भ्रातरो यूयं यस्मिन्

कस्मिन्नपि पदे तिष्ठन्त आहूता भवथ ईश्वरस्य गोचरे तस्मिन्नेव पदे
तिष्ठत।

अपरञ्च अकृतविवाहान् जनान् प्रति प्रभोः कोऽपि निदेशो मम समीपे २५
नास्ति किन्तु प्रभुनानुगृहीतः सन् विश्वास्यो भवामीतिनिमित्तंस्वयमेवैतां
मन्त्रणां विश्राणयामि। उपस्थिताय दुःखाय मनुष्यस्यानूढत्वेन स्थिति २६
र्भद्रा मया बुध्यते। किन्तु यदि त्वं विवाहबन्धनेन बद्धस्तिष्ठसि तर्हि २७
तस्मात् मोचनं मा समीहिष्ठाः ; यदि च मुक्तः सन् तिष्ठसि तर्हि पुनः
स्त्रियं मा समीहिष्ठाः। किन्तूद्वाहे कृतेऽपि तव कलुषं न जायते अप- २८
रञ्च यद्यनूढा कन्या विवहति तर्ह्यपि तस्य किल्बिषं नास्ति तथापि
तेषां वापुषिकः क्लेशो जनिष्यते किन्तु तेषु मम करुणा जायते। हे भ्रातरो २९
मया यूयम् उच्यध्वे समयोऽतीव संक्षिप्तः ; अतो येषां भार्य्या विद्यन्ते ते ३०
भार्य्याहीना इव, ये रुदन्ति तेऽरोदिन इव, ये चानन्दन्ति ते निरानन्दा
इव, ये तु क्रीणन्ति ते सम्पत्तिहीना इव भवेयुः ; अपरञ्च ये जना एतत् ३१
संसारस्य व्यापारं कुर्व्वन्ति ते कुव्यापारं मा कार्षुः, यस्माद् एतस्य जगतः
कौतुकं लुप्यते। किन्तु यूयं निश्चिन्ता भवथ ममायम् अभिलाषः ; यो ३२
जनोऽकृतविवाहः स केन प्रकारेण प्रभोः सन्तोषं जनयितुं शक्नोति तदर्थं
प्रभोः कार्य्ये चिन्तनं करोति। किन्तु यः कृतोद्वाहः स केन प्रकारेण ३३
निजपत्न्याः सन्तोषं जनयितुं शक्नोति तन्निमित्तं सांसारिककार्य्यस्य
चिन्तनं करोति। तद्वद् ऊढानूढयो र्योषयोरेतावान् प्रभेदो विद्यते ३४
अनूढा योषा वपु र्मनसश्च यथा पूता भवति तन्निमित्तं प्रभो चिन्तनं करोति
किन्तूढा या योषा सा केन प्रकारेण स्वामिनः सन्तोषं जनयितुं शक्नोति
एतदभिप्रायेण सांसारिके कार्य्ये चिन्तनं करोति। एताः सर्व्वाः कथा ३५
युष्मान् उन्माथे पातयितुं कथयामि इति नहि किन्तु यथा योग्यं कार्य्यं
कुरुथ तथा चाञ्चल्यरहितेन मनसा ईश्वरस्य सेवने नियुक्तास्तिष्ठथ युष्माकं
हितार्थम् एतत् कथयामि।

कन्याया यौवनावस्थायां गतायामपि विवाहकरणस्यावश्यकत्वात् ३६

अनूढत्वेन कन्यायाः स्थापनम् अनुचितम् इति यदि कोपि बुध्यते तर्हि
३७ इच्छानुसारतः कृते कलुषं न जायते ; तौ विवहेतां । किन्तु विवहनस्या-
वश्यकत्वं नास्तीति मनसि विबुध्य निजाभिलाषं वशीकृत्य अभिलाषो-
परि शक्तिं स्थापयित्वा यो जनो निजां कन्याम् अनूढत्वेन स्थापयितुं
३८ निश्चिनोति स उत्तमं कर्म्म करोति । वस्तुतस्तु यो जन उद्वाहयति स
भद्रं कर्म्म करोति यश्च नोद्वाहयति स ततोप्यतिशयं भद्रं करोति ।
३९ यावत्कालं पति र्विद्यते तावत्कालं योषा विवाहबन्धनेन बद्धा तिष्ठति
किन्तु पत्यौ प्रमीते सति सा मुक्तीभूय केवलप्रभो र्भक्तानां यः कश्चित्
४० तस्या मनोनीतो भवति तमेव विवोढुं शक्नोति । किन्तु सा यदि पुनर-
नुद्वह्य तथैव तिष्ठति तर्हि ततोप्यतीव सुखिनी भवितुं शक्नोति मदीयो
विचार इत्थं भवति ईश्वरस्यात्मा ममान्तर्विद्यत इति मया बुध्यते ।

---

८ अष्टमोध्यायः ।

१ देवनिवेदितद्रव्यभक्षणकथा ७ दुर्ब्बललोकेषु कृपाकरणकथनञ्च ।

१ देवप्रसादेऽस्माकं ज्ञानमास्ते तद् वयं सर्व्वे विद्मः तथापि तज्ज्ञानं गर्व्वं
२ जनयति किन्तु प्रेम्ना निष्ठा भवति । अतः कश्चन यदि मनसि चिन्तयति
३ मम किञ्चिज् ज्ञानमास्ते तर्हि तस्य परमज्ञानं किमपि नास्ति । किन्तु
४ य ईश्वरे प्रीयते स ईश्वरेण परिचीयते । देवताबलिप्रसादादनप्रस्ताव
इदमाख्यामि वस्तुतस्तु नहि देव एक ईश्वरो द्वितीयो नास्ति वयम् अदो
५ विद्मः । यद्वद् अनेका देवा अनेकाः प्रभवश्चासते तद्वद् वियति भुवि चेश्वरस्य
६ नाम्नानेकानि वस्तून्यासते ; किन्तु यतः सर्व्वाणि वस्तूनि यत् कारणाच्च
वयम् अस्त्यामहि सोस्माकं पितृस्वरूपः केवल एक ईश्वरो विद्यते; येन
चाखिलानि वस्तूनि वयञ्चास्त्यामहि सएव यीशुख्रीष्टोस्माकम् एकः
७ प्रभुः । किन्तु सर्व्वेषाम् ईदृग् ज्ञानं नहि यस्मात् कियन्तो लोका इदानीं
यावद् देवतां मन्यमाना देवताप्रसादद्रव्यं भुञ्जते तेन दुर्ब्बलतया
८ तेषां स्वान्तानि मलीमसानि भवन्ति । किन्तु खादनीयेन द्रव्येण वयम्

ईश्वरस्य समीपे नहि प्रतिष्ठिता यस्माद् भोजने कृतेऽस्माकं गुणो
नास्ति न कृतेप्यस्माकं दोषो नास्ति। अतएव युष्माकम् एषा शक्ति ९
र्यथा दुर्ब्बललोकानां बाधास्वरूपा न भवति तत्र सावधानास्तिष्ठत।
यतो ज्ञानवन्तं त्वां यदि कश्चिद् देवमण्डपे भोजनोपविशन्तं वीक्षते तर्हि १०
तस्य मनसो दुर्ब्बलतया तं प्रसादं भोक्तुं सोपि जनः प्रगल्भो भविष्यति।
तस्माद् यत्कारणात् ख्रीष्टोऽम्रियत त्वदीयः स दुर्ब्बलो भ्राता त्वज्ज्ञानेन ११
किं नंक्ष्यति? किन्तु भ्रातृणां विरुद्धमदः किल्विषं कृत्वा तेषां दुर्ब्बलानि १२
चेतांस्याहत्य यूयं ख्रीष्टस्य विरुद्धं वृजिनं कुरुथ। अतः क्रव्याशनं यदि १३
मम भ्रातु र्विघ्नस्वरूपं भवति तर्हि यथाहं भ्रातृणां विघ्नस्वरूपो न भवामि
तदर्थम् यावज्जीवं पललं न भक्षिष्यामि।

---

## ९ नवमोऽध्यायः।

१ सुसंवादप्रचारणेन सुसंवादप्रचारयितृणामुपजीवनकथनं १५ विना मूल्यं पौलस्य सुसंवादप्रचारणं १९ सर्व्वप्रकारलोकान् तोषयितुं यतनं २४ ख्रीष्टीयलोकानां धावनमल्लयुद्धकथनञ्च।

अहं किम् एको जनः प्रेरितो न भवामि? किमहं स्वायत्तो न भवामि १
च? किम् अस्माकं प्रभु र्यीशुख्रीष्टस्य नादर्शि? यूयमपि किं प्रभुना मामकीन-
कर्म्मफलस्वरूपास्थ न भवथ? भिन्नलोकान् प्रति न प्रेरितोपि युष्मान् प्रति २
प्रेरितो भवामि यतः प्रभुना मम प्रेरितत्वपदस्य प्रमाणस्वरूपा यूयं भवथ।
ये ये लोका मयि दोषमारोपयन्ति तानभि ममादः प्रतिवचनम्। ३
अन्नपानार्थिकां सामग्रीम् आदातुं किमस्माकम् अधिकारोनास्ति? ४
येन्ये प्रेरिताः प्रभो र्भ्रातरः कैफाश्च तैरिव किमस्माभि र्धर्म्मभगिनीं ५
व्युह्य तया सह गमनं नाधिक्रियते? यद्वा मद्बर्णबाभ्यां द्वाभ्यामेव साधारण- ६
श्रमस्य परित्यागः किं नाधिक्रियते? निजधनं व्ययित्वा संग्रामं कर्त्तुं क एति? ७
द्राक्षाक्षेत्रं रोपयित्वा तत्फलानि को न खादति? पशुव्रजस्य पाला तस्य
पयः को न पिवति? किमहं केवलमानुष इव कथां कथयामि; व्यवस्थायां ८
किमेतादृशं न लिख्यते? मूसाव्यवस्थाग्रन्थे लिखितमास्ते शस्यं मर्द्दतो ९

वृषभस्यास्यं मा बधान। ईश्वरेण केवलस्य बलीवर्द्दस्य चिन्ता क्रियते?
१० किं वा विशेषतोऽस्मन्निमित्तम् एतद्वाक्यम् उच्यते? अतोऽस्मन्निमित्तमेव
वचनमेतद् लिखितमासीत् तस्माद् यो जनः कृषिं करोति स प्रत्याशयैव
११ करोति यश्च शस्यं मर्द्दति स शस्यलाभप्रत्याशयैव मर्द्दति। अस्माभि
र्युष्मन्निमित्तं यदि पारमार्थिकं बीजम् उप्तं तर्हि युष्माकं सांसारिकस्य
१२ शस्यस्य वयमंशिनो भविष्याम एतत् किमाश्चर्य्यं? यदि युष्मान् इतरोऽधि-
करोति तर्हि वयं ततोधिकं किं नाधिकरिष्यामः? तथापि सोधिकारो
नास्माभि र्व्यवाह्रियत यस्माद् अस्मत्तः ख्रीष्टस्य सुसंवादे विघ्नो जायि-
१३ तेत्याशङ्कमाना वयं सर्व्वं सहामहे। नो चेद् ये मण्डपे सेवन्ते तेषां सा
सेवैव जीविका भवति ये च वेदीं सेवन्ते तेषां सैव जीविका भवति एतत्
१४ किं यूयं न विद? तद्वत् यैः सुसंवादः प्रचार्य्यते तेषां तत्प्रचारणं जीविका
भविष्यति प्रभुनापीदं न्यरूपि।

१५ मया कदापि नेत्थं व्यवाहारि, साम्प्रतीदं करणीयम् इत्याशयेनापि
सर्व्वा एताः कथा न मया लिख्यन्ते, यतः केनापि जनेन ममैतद्यशो
१६ मुधाकरणान् मम मरणं वरम्। अहं यद्यपि सुसंवादं प्रचारयामि तथापि
मम यशो नास्ति यतः प्रभुनायं भार एतादृश आस्ते सुसंवादे न प्रचारिते तु
१७ निश्चितं मह्यं दुर्गति र्घटिष्यते। किन्तु यदि मया स्वेच्छात एतत् कर्म्म
क्रियते तर्हि मम फलमास्ते नो चेद् अनिच्छातः क्रियते तथापि सुसंवाद-
१८ प्रचारणभारो मह्यम् अदायि। तर्हि मम किं फलं? सुसंवादे मम योऽधि-
कारस्तेन कुव्यवहारम् अकृत्वा ख्रीष्टीयसुसंवादप्रचारणसमये विनाभरणं
तत् क्रियते मया ममेदं फलम्।

१९ अखिललोकानाम् अनायत्तत्वान् मुक्तोपि मयि भूरिशो लोकान् सक्रिन
२० कर्त्तुम् अहं निखिलानां चेटकत्वं स्वीकृतवान्। यिहूदिनः सक्रिन
कर्त्तुं तेषां मध्येहं यिहूदी इवाभवं व्यवस्थाधीनलोकांश्च सक्रिन कर्त्तुं
२१ तेषां मध्येहं व्यवस्थाधीन इवाभवम्। अपरम् ईश्वरस्य व्यवस्थया वर्जितो-
ऽभूत्वा ख्रीष्टस्य व्यवस्थाधीनः सन्नपि व्यवस्थाहीनलोकान् सक्रिन कर्त्तुं

व्यवस्थानधीन इवाभवम्। अपरञ्च दुर्ब्बललोकान् सङ्गिनः कर्त्तुं दुर्ब्बल- २२
इवाभवं केनापि प्रकारेण कतिपयलोकाः परित्राता भवन्तीत्यभिप्रायेण
यस्य यादृश आचारस्तस्य समीपे तादृशम् आचारम् अचारिषम्। तैः सह २३
सुसंवादस्य फलभुग् यथा भवामि तदर्थं सुसंवादानुरोधाद् एतानि
करोमि।

ये जनाः पणं लब्धुं धावन्ति ते सर्व्वे धावन्ति किन्तु केवल एकस्तत्पणं २४
लभते, एतद् यूयं जानीथः यूयमपि यथा पणं प्राप्तुं शक्नुथ तथैव
धावत। अपरं ये मल्लैः सह युध्यन्ति ते सर्व्वत्र परिमितभोगिनो भवन्ति २५
इतरे नश्वरं किरीटं प्राप्तुं तत् कुर्व्वन्ति किन्तु वयम् अनश्वरमुकुटार्थं तत्
कुर्म्मः। तस्माद् अहमपि धावामि किन्तु लक्ष्यम् अनुद्दिश्य न धावामि २६
तथा मल्लयोधिन युध्यामि किन्तु यो जनः प्रभञ्जनेन सह युध्यति तद्वन्
नहि। इतरान् प्रति सुसंवादं प्रचार्य्य चेत् स्वयम् अग्राह्यो भवामि इति- २७
साध्वसाद् इन्द्रियाणि दमित्वा स्ववपुःस्ववशीकृत्य सर्व्वदा स्थापयामि।

---

१० दशमोऽध्यायः।

१ यिहूदीयलोकानाम् अनुग्रहप्रापणं दोषस्य कथनं ६ अस्मान् अवहितान् कर्त्तुं तेषां दोषकथनं १४ प्रभोर्भोज्ये कथनं २७ देवतानिवेदितसामग्र्यशनवारणञ्च।

हे भ्रातृगणा युष्माकं पूर्व्वपुरुषाः सर्व्वे धाराधराधस्तस्थुः पारावार- १
मध्येन वव्रजुश्च, ते सर्व्वे मुसामुद्दिश्य वारिवाहे सरित्पतौ च ममज्जुश्च; तत् २
पारमार्थिकं भक्ष्यं पेयञ्च बुभुजिरे पपुश्च; वस्तुतस्तु तेषां पश्चाद्गामिनी ३
या पारमार्थिकशिलोच्चयान् निर्गता सरित् तस्याः पानीयं पपुः स शैलः ४
ख्रीष्टस्वरूपः; किन्तु तेषामनेकान् प्रति ईश्वरस्यासन्तुष्टत्वात् ते मध्ये- ५
विपिनं मम्रुः; एतत् सर्व्वं यथा यूयम् अज्ञाता न तिष्ठथ इत्यहं कामये।

अस्माकं शिक्षार्थम् एतानि तान् प्रति जघटिरे वस्तुतस्तु ते यथा ६
कामयाञ्चक्रिरे तथा वयम् अभद्रं न कामयामहे। तेषां यथा बहवो देव- ७
पूजका वयं तथा न भवामः; यथा लिखितमास्ते एते लोका अशितुं
पातुञ्च समुपविश्य क्रीडितुम् उत्थिताः। अपरञ्च यथा व्यभिचारकर्म्म ८

कारणात् तेषां त्रिविंशतिसहस्राणि लोका एकदा पेतुः, वयं तथा
९ व्यभिचारकर्म्म न कुर्म्मः। अपरञ्च ख्रीष्टस्य परीक्षाकरणात् तेषां कियन्तो
१० जना दन्दशूकदंशनाद् विनेशुः, वयं तथा तं न परीक्षामहै। अपरं तेषां
कियन्तो लोका वाक्कलहकरणात् मार्य्या हताः, वयं तथा वाक्कलहं
११ न कुर्म्मः। तान् प्रति यान्येतानि जघटिरे तानि दृष्टान्तस्वरूपाणि भूत्वा
जगतः शेषयुगे वर्त्तमानानाम् अस्माकं शिक्षार्थं लिखितानि जातानि।
१२ अतएव यः कश्चित् सुस्थिरम्मन्यः स यथा न पतति तत्र सावधानो
१३ भवतु। मनुजान् प्रति या परीक्षा सम्भवति तां विना युष्मान् प्रति कापि
परीक्षा नाघटिष्ट; अपरं विश्वास्य ईश्वरः स युष्माकं शक्तेः समधिक-
परीक्षायां युष्मान् न पातयिष्यति तथापि यूयं यथा सोढुं शक्नुथ तदर्थं
परीक्षाघटनसमये रक्षायाः पन्थानं करिष्यति।
१४ हे प्रियभ्रातरो देवार्च्चातो विमुखीभवत। अहं विज्ञलोकवद् युष्मान्
१५ प्रति कथयामि यूयं मदीयकथाया विवेचनं कुरुत। वयं यद् आशीरूप-
१६ पात्रं धन्यं वदामस्तेन किं वयं ख्रीष्टस्य रक्तस्य सहभागिनो न भवामः?
१७ यञ्च पूपं भञ्ज्मस्तेन किं वयं ख्रीष्टस्य वपुषः सहभागिनो न भवामः? यद्वद्
एकः पूपोऽस्ति तद्वद् वयम् अनेकाः सन्तोऽप्येकवपुःस्वरूपा भवामः, यतो वयं
१८ सर्व्वे एकपूपस्य सहभागिनः। इस्रायेलीवंशोद्भूतानां लोकानाम् आचरणं
पश्यत ये बलिरूपामुत्सृष्टां सामग्रीं भुञ्जते यज्ञवेद्याः सहभागिनो ते किं न
१९ भवन्ति? देवता यद् वास्तविको, देवतायै बलिदानञ्च यद् वास्तविकं, तत्
२० किम् अहं कथयामि? तन्न भिन्नदेशिभि र्ये बलयो दीयन्ते ते ईश्वराय
नहि भूतेभ्यो दीयन्ते तस्माद् भूतैः सार्द्धं यूयं भागिनो भवथ, इत्यहं
२१ नाभिलष्यामि। यूयं प्रभोः पात्रेण भूतस्य च पात्रेण पातुं न शक्नुथ तथा
प्रभुना निरूपितस्य खाद्यस्य भूतेन निरूपितस्य खाद्यस्य च सहभागिनो
२२ भवितुं न शक्नुथ। वयं किं परमेश्वरस्य कोपं जनयिष्यामः? वयं किं
तस्माद् बलवन्तः?
२३ मां प्रति सर्व्वं द्रव्यम् अप्रतिषिद्धं किन्तु निखिलं परेषां मङ्गल

जनकं न भवति; सर्व्वं मां प्रति न प्रतिषिद्धं किन्तु सर्व्वमेव
परेषां निष्ठां न जनयति। अतः सर्व्वजनः स्वीयहितं नेहित्वान्यस्य २४
हितम् ईहतां। यत् खाद्यं हट्टे विक्रीयते मनोनुरोधात् किमपि २५
न पृष्ट्वा तद् भुज्यतां यतो 'पृथ्वी पृथ्वी स्थितं वस्तु निखिलं पारमेश्वरम्।' २६
अपरम् अविश्वासिलोकानां कश्चन यदि त्वां निमन्त्रयति तत्र त्वं यदि २७
यियासमि तर्हि मनोनुरोधात् किमपि न पृष्ट्वा यत् किञ्चन द्रव्यमुप-
स्थापयति तदेव भुंक्ष्व। किन्त्वेतत् खाद्यं देवतायाः प्रसाद इति कथा तुभ्यं २८
यदि केनापि कथ्यते तर्हि यस्त्वां व्यजिज्ञपत् तदनुरोधात् मनोनुरोधाच्च
तन्नाशान ह्रि थतः 'पृथ्वी पृथ्वीस्थितं यच्च सकलं पारमेश्वरम्।'
किन्तु मनोनुरोध एष न त्वदीयः, एष तदीयः; यस्माद् मम योधि- २९
कारोस्ति स परकीयमनोनिन्नः कुतो भविष्यति? यद्यहम् अनुगृहीतः सन् ३०
भुञ्जे तर्हि यद्द्रव्यहेतो धन्यवादं करोमि तदशनात् लोकैः कुतोहं दोषी
कारिष्ये? तस्माद् अशनपानादीनि यानि कानिचित् कर्म्माणि युष्माभिः ३१
क्रियन्ते तानि सर्व्वाणीश्वरस्य महिम्नः प्रकाशार्थं क्रियन्ते। यिहूदि- ३२
नाम् अन्यदेशिनाम् ईश्वरस्यस माजस्य वा युष्माभिः कस्यचिदपि
विघ्नरूपै र्न भवितव्यम्। किन्त्वहं यद्वत् स्वीयहितं नेहित्वा बहूनां ३३
परित्राणार्थं तेषां हितम् ईहित्वा सर्व्वस्मिन् सर्व्वेषां तोषं जनयितुं
प्रयते, अपरम् अहं यद्वत् ख्रीष्टस्यानुगामी तद्वद् यूयमपि ममानु- ३४
गच्छत।

---

११ एकादशाध्यायः।

१ पुरुषीयोत्तमाङ्गं नाच्छादनीयं योषीयोत्तमाङ्गमवश्यमाच्छादनीयं १७ प्रभो
र्भोज्ये करिन्थिनः प्रति भर्त्सनं २१ कथं भोक्तव्यमितिनिर्णयनं ३१ तस्मिन्
पौलोपदेशश्च।

हे भ्रातरो यूयं सर्व्वस्मिन् कार्य्ये मां स्मृत्वा मद्दत्तां व्यवस्थां पाल- १
यध्वे तत्कारणाद् यूयं मया प्रशंसध्वे। तथापि योषित उत्तमाङ्गरूपः २
पुमान्, पुंस उत्तमाङ्गरूपः ख्रीष्टः, ख्रीष्टस्योत्तमाङ्गरूप ईश्वरः, एषा कथा ३
युष्माभिरवगम्यत इत्यहं कामये। अपरञ्च संवृतशिरसा पुंसा प्रार्थिते ४

५ योपदिष्टे तेन स्वीयोत्तमाङ्गम् अपमन्यते। अनावृतशिरसा योषिता
प्रार्थिते वोपदिष्टे तयापि स्वीयोत्तमाङ्गम् अपमन्यते तथा तया स्वीय-
६ मौलि र्मुण्डित इव। तथाहि सीमन्तिन्या मस्तकानावरणात् तस्या मस्तक-
मुण्डनं वरम् अतएव शिरोमुण्डनं केशच्छेदनं वा यदि नार्य्या लज्जाकरं
७ भवति तर्हि सा शिरः समाच्छादयेत्। पुमान् ईश्वरस्य प्रतिमूर्त्तिः
तस्य गौरवस्वरूपत्वात् तेन शिरो न संवरणीयं किन्तु सीमन्तिनी पुंसो
८ गौरवस्वरूपा। यतो योषातः पुमान् नोदपादि किन्तु पुंसो योषोदपादि;
९ तथा स्त्रीप्रयोजनिका पुरुषसृष्टि र्न बभूव किन्तु पुरुषप्रयोजनिका
१० स्त्रीसृष्टि र्बभूव। अतो दूतानामनुरोधात् सीमन्तिन्या शिरः समाच्छा-
११ दनीयं। प्रभो र्विधिना स्त्रिया पुमान् अपेक्ष्यते स्त्री च पुंसापेक्ष्यते।
१२ यतः पुरुषाद् यद्वद् योषिद् उदपादि तद्वद् योषितः पुरुष उत्पद्यते
१३ किन्तु निखिलानि वस्तूनीश्वराद् उत्पेदिरे। मस्तकम् अनाच्छाद्य ईश्वरे
१४ प्रार्थनं योषितउचितं नवेति युष्माभिः स्वयमेव विविच्यताम्। पुरुषाणां
दीर्घकेशत्वं तेषां लज्जास्पदम् एतत् किं युष्माभिः स्वभावतो नाशिक्षि;
१५ किन्तु योषाया दीर्घकेशस्तस्याः भूषणं यत आच्छादनाय तस्यै केशो
१६ दत्तः; अत्र यदि कश्चिद् आपत्तिं करोति तर्हीश्वरस्य समाजानाम्
अस्माकञ्च तादृग् व्यवहरणं न जायते।

१७ यूयं सम्भूय हितमलब्ध्वा हिततरद् अलभध्वम् इतिहेतो र्मया यूयं
१८ न प्रशंस्यध्वे। यतः प्रथमं समाजे मिलति सति युष्माभिः परस्परं
१९ भिद्यते कथैषा मया निशम्यते तत्रापि किञ्चिद् विश्वस्यते। यतो युष्माकं
ये ये लोका ग्राह्यास्ते यथा प्रकाश्यन्ते तदर्थं युष्माकं मध्ये वैधर्म्य-
२० सञ्चारेणावश्यभाव्यम्। यदा यूयम् एकस्थाने मिलथ तदा प्रभो र्भोज्यं भोक्तुं
२१ नहि; यतो भोजनकाले युष्माकं केनापि कोपि नापेक्ष्यते तेनैव कश्चिद्
२२ बुभुक्षितस्तिष्ठति कश्चन परितृप्यति। अशितुं पातुञ्च युष्माकं किं सदनानि
न सन्ति ? यद्वा ईश्वरस्य समाजं तुच्छीकृत्य भक्ष्यहीनलोकान् किं लज्जा-
यथ ? अत्र किं कथयामि किं युष्मान् प्रशंसिष्यामि तत् कर्त्तुं न शक्नोमि।

प्रभो र्य उपदेशो मया समलम्भि युष्मभ्यञ्चादायि सएषः। परकर- २३
समर्पणक्षपायां प्रभु र्यीशुः पूपमादाय ईश्वरं धन्यं व्याहृत्य तं भङ्क्त्वा भाषि- २४
तवान् यूयम् अमुं गृहीत्वा भुङ्ग्ध्वम् अयं युष्मन्निमित्तं मम भग्नविग्रह-
स्वरूपः मां स्मर्त्तुम् एतत् कर्म्म कुरुत। पुनश्च रजन्यां भोजनात् परं तथैव २५
कंसम् आदाय गदितवान् एतन् मम शोणितेन निर्णीतं नूतननियमरूपम् ;
एतद् भाजनेन युष्माभि र्यतिवारं पीयते ततिवारं मम स्मरणार्थं पीयताम्।
यतिवारं युष्माभिरेष पूपो भुज्यते भाजनेनानेन पीयते च ततिवारं प्रभो- २६
रागमनं यावत् तस्य निधनं प्रकाश्यते। अपरञ्च यः कश्चिद् अयोग्यः सन् २७
प्रभोरिमं पूपम् अश्नाति भाजनेनानेन पिवति वा स प्रभोः कायस्य
रुधिरस्य च दायी भविष्यति। तस्मान् मानवः पूर्व्वं निजं परीक्ष्य पश्चाद् २८
अमुं पूपं भुंक्ताम् एतेन भाजनेन च पिवतु। यस्मानर्हत्वेन भुंक्ते पिवति च २९
स प्रभोः कायम् अविमृश्य भुक्त्वा पीत्वा च स्वीयं दण्डं जनयति। एतत्का- ३०
रणाद् युष्माकं भूरिशो लोका दुर्ब्बलाः पीडिताश्च भवन्ति बहवो महा-
निद्रां गच्छन्ति च। अस्माभि र्यदि निजो विचारः स्वयमेव क्रियते तर्हि ३१
दण्डो न लप्स्यते ; किन्तु जगतो जनैः समं दण्डो न लभ्यते, इत्यभि- ३२
प्रायेण वयं प्रभुना विचारिताः सन्त इदानीं शास्तिं भुञ्ज्महे।

हे मम भ्रातरो भोक्तुं मिलितानां युष्माकम् एकेनेतरोऽपेक्ष्यताम्। ३३
तस्माद् युष्माकं मेलनं दण्डकारणं यथा न भवति तदर्थं यदि कश्चिन ३४
बुभुक्षितो भवति तर्हि स निजभवने भुंक्ताम् ; एतद्भिन्नं यदवशिष्यते
युष्माकं समीपागमनकाले तद् व्यवस्थापयिष्यते मया।

---

## १२ द्वादशोऽध्यायः।

१ आत्मनो बहुविधदानकथनं १२ वपुःपूरणाय यथा नानाङ्गानां प्रयोजनं तथा समाजपूर्त्त्यर्थं नानादानानां प्रयोजनञ्च।

हे भ्रातरो यूयं पवित्रस्यात्मनो विश्राणनम् अविदित्वा यत् तिष्ठथ १
तदहं नाभिलष्यामि। भिन्नदेशिनो यूयं स्वाचारानुसारेण अवाक्प्रति- २

३ मायाः सेवायाम् आसक्ता आध्वम् इति युष्माभि र्ज्ञायते। तस्माद् अहं
युष्मान् एतां कथां वेदयामि, ईश्वरस्यात्मना कथां कथयित्वा कोपि यीशुं
४ शप्त इति न व्याहरति; तथा पवित्रस्यात्मनः प्रादुर्भावं विना कोपि यीशुं
५ प्रभुरिति भाषितुं न शक्नोति। आत्मनो वितरणं बहुधा किन्त्वात्मैकः; तथा
६ प्रभोः सेवनं बहुविधं किन्तु प्रभुरेकः। अपरम् अखिलजन्मिनां निखिल-
७ कार्य्याणां साधयितुरीश्वरस्य कर्म्माणि बहुविधानि किन्त्वेक ईश्वरः। हिता-
८ र्थम् एकैकशो जनाय तेनात्मना विशेषो विशेषो गुणो विश्राण्यते। तस्मात्
तेनैकेनात्मना कस्मैचिज् ज्ञानवाक्यं कस्मैचिद् विद्यावाक्यं कस्मैचिच्च
९ विश्वासवाक्यं दीयते, तथा तेनैवात्मना कस्मैचित् स्वास्थ्यकरणसामर्थ्यं
१० कस्मैचिद् अद्भुतकर्म्मकरणसामर्थ्यं कस्मैचिद् भविष्यद्वाक्यवदनसामर्थ्यम्
एकस्मै परकीयमानसज्ञानसामर्थ्यं तदन्यस्मै नानादेशीयभाषाभाषण-
११ सामर्थ्यम् इतरस्मै च भाषार्थभाषणसामर्थ्यं प्रदीयते। इत्थम् एक आत्मा
स्वेच्छानुसारतः प्रतिजनम् अंशक्रमेण शक्तिं विश्राण्य निखिलानि
कर्म्माणि स्वयं साधयति।

१२ यद्वद् वपुरेकं किन्तु तदीयाङ्गप्रत्यङ्गानि बहूनि तथा वपुषोङ्गानाम्
१३ अनेकत्वेपि वपुरेकम् भवति तद्वत् ख्रीष्टः। यस्माद् वयं यिहूदिनो भवामो
वा भिन्नदेशिनो भवामः किङ्करत्वे तिष्ठामो मुक्ता वा तिष्ठाम एकेनात्मना
१४ शरीरैकेन मज्जिता अभूम तथैकात्मभुक्तास्चाभूम। वपुरेकाङ्गं नहि किन्तु
१५ बह्वङ्गं। तत्र चरणो यदि वदति नाहं हस्त एतस्मात् शरीरस्यैकांशोपि न
१६ भवामि तर्हि तस्मात् स किं शरीरस्यैकांशो न भविष्यति? तथा श्रोत्रं
यदि वक्ति नाहं नयनं भवामि तस्मात् शरीरस्यैकांशोपि न भवामि तर्हि
१७ तत्कारणात् स किं कायैकांशो न भविष्यति? अपरञ्च सर्व्वं शरीरं
यदि नेत्रमयं भवति तर्हि श्रवणं कुत्र तिष्ठति? तथा कृत्स्नं शरीरं यदि
१८ श्रवणमयं भवति तर्हि घ्राणं कुत्र तिष्ठति? किन्त्विदानीम् ईश्वरेण स्वेच्छानु-
१९ सारतः मध्येशरीरम् अङ्गप्रत्यङ्गानि स्थापितानि। यदि केवलम् एकाङ्गम्
२० अभविष्यत् तर्हि शरीरं कुत्र? तस्माद् बह्वङ्गमयम् एकं शरीरं विद्यते।

अतएव त्वयि मम प्रयोजनं नास्ति नयनं पाणिम् ईदृशीं वाचं वदितुं न २१
शक्नोति, तथा त्वया मम प्रयोजनं नास्तीति मूर्द्धा पदद्वयं वदितुं न शक्नोति;
वस्तुतस्तु मध्येविग्रहं यान्यङ्गानि दुर्ब्बलानि तैरङ्गैरपि प्रयोजनं विद्यते। २२
अपरञ्च मध्येशरीरं यान्यङ्गानि कुत्सितानि तानि वयम् अधिकं शोभयामः २३
तेन तानि कुदृश्यान्यङ्गान्यपि सुदृश्यानि भवन्ति। यदङ्गं स्वयं सुदृश्यं तत् २४
शोभयितुम् अस्माकं प्रयोजनं नास्ति। अस्मान् मध्येविग्रहं यथा भिन्न- २५
भावो न भवति सर्व्वान्यङ्गानि यथा मिथ उपकर्त्तॄणि भवन्ति च, इत्या-
शयेनेश्वर अनादरणीयम् अङ्गं आदृत्य कृत्स्नं वपूरचिरं रचयाञ्चकार।
तत्र यद्येकाङ्गं दुःखि भवति तर्हि निखिलान्यङ्गानि दुःखीनि भवन्ति २६
तथा यद्येकाङ्गम् आदृतं भवति तर्हि सर्व्वान्यङ्गानि प्रमोदन्ते। यूयम् २७
अङ्गप्रत्यङ्गानि भूत्वा ख्रीष्टस्य शरीरस्वरूपा भवथ। तत्र प्रथमतः प्रेरिता २८
द्वितीयतो भविष्यद्वादिनस्तृतीयत उपदेष्टारस्चतुर्थत आश्चर्य्यकर्म्मकर्त्तारः
तद्भिन्ना अनामयकारिण उपकर्त्तारः शास्तारो नानाभाषाभाषिणश्च एते
सर्व्वे ईश्वरेण निजसमाजे ऽस्थापिषत। अमीषां सर्व्वएव किं प्रेरिताः? २९
सर्व्वएव किं भविष्यद्वक्तारः? सर्व्वएव किम् उपदेष्टारः? सर्व्वएव किम्
आश्चर्य्यकर्म्मकर्त्तारः? सर्व्वएव किम् अनामयकर्त्तारः? सर्व्वएव किं नाना- ३०
भाषाभाषितारः? सर्व्वएव किं भाषार्थकथयितारः? अतएव यूयं श्रेयो दानं ३१
लब्धुम् ईहध्वं किन्त्वपरमेकं श्रेयांशं पन्थानं युष्मान् दर्शयामि।

---

१३ त्रयोदशोऽध्यायः।

१ अखिलपारमार्थिकदानात् प्रेमदानस्योत्तमत्वं ४ तस्य फलकथनं विश्वासप्रत्याशाभ्यां तस्य श्रेष्ठत्वञ्च।

मर्त्त्यानां स्वर्गीयदूतानां वा भाषां भाषितुं समर्थस्यापि यदि मम १
प्रेम न तिष्ठति तर्हि केवलनिनादवादिभेरीकांस्यतालस्वरूपोऽहं भवामि।
अपरञ्च यद्यपि भविष्यद्वाक्यानां सर्व्वप्रकारनिगूढवाक्यानां सर्व्वप्रकार- २
विद्यानाञ्चाहं पारदृश्वा भवामि तथा येन पर्व्वतं स्थानान्तरं गम-
यितुं शक्नोमि तादृशो विश्वासोऽपि यदि मम जायते तथापि प्रेमा-

३ भावेऽहम् अगणनीयएव भवामि। अपरं यद्यपि दुर्गतलोकानां भरणाय सर्व्वस्वं विश्राणयामि निजविग्रहं दाहयितुं ददामि च तथापि प्रेमाभावे मम किमपि फलं नास्ति।

४ प्रेम धैर्य्यम् अवलम्बते हितं ददाति च प्रेम परं न द्वेष्टि प्रेम नात्मानं
५ श्लाघते नाभिमन्यते च। अपरम् अनुचितं नाचरति नात्मने चेष्टते हठात्
६ न क्रुध्यति परानिष्टञ्च न चिन्तयति। पापे न मोदमानं सत्य मोदते।
७ सर्व्वत्र तितिक्षते सर्व्वत्र प्रत्येति सर्व्वत्र प्रत्याश्रुते सर्व्वत्र सहते च। यदि
८ भविष्यद्वाक्यं तिष्ठति तस्य लोपो भविष्यति, यदि च नानाभाषास्तिष्ठन्ति तासां निवृत्ति र्भविष्यति, यदि विद्या तिष्ठति तस्या अपि लोपो भवि-
९ ष्यति, किन्तु जातु प्रेम्नो लोपो न भविष्यति। अस्माकं ज्ञानम् अंशतो
१० विद्यते भविष्यद्वाक्यमपि अंशतो विद्यते; किन्तु सम्पूर्णत्वे सति
११ नांशत्वं स्थास्यति। यदा बालक आसं तदा बालकइव कथामकथयं बालकइव प्रबोधि बालकइव तर्कम् अकार्षञ्च किन्तु सति वक्तवयसि
१२ तत् सर्व्वं बालकत्वं परित्यक्तवान्। इदानीं वयम् अभ्रेणास्पष्टं वीक्षामहे किन्तु तदा सम्मुखस्थाइव वीक्षिष्यामहे; अपरम् अधुना मम ज्ञानम् अंशतो विद्यते किन्तु तदाहं स्वयं यथा परिचितस्तथैव परिचेष्यामि।
१३ इदानीं प्रत्ययः प्रत्याशा प्रेम च यान्येतानि त्रीणि विद्यन्ते तेषां मध्ये प्रेम श्रेयः।

---

१४ चतुर्दशोऽध्यायः।

१ नानाभाषाभाषणात उपदेशनस्य श्रेष्ठत्वं ६ उपदिश्य लोकानामवश्यबोधयितव्यत्वं २० बोधयितुः फलं २६ उपदेशे भाषाभाषणे च पौलस्य कथनं ३४ समाजे वामानामप्रचारणकथनं ३६ पौलस्य च शासनवाक्यञ्च।

१ प्रेम्नोऽनुष्ठानं कुरुत्वा पवित्रस्यात्मनो दानं विशेषत उपदेष्टुं शक्तिं चेष्ट-
२ ध्वम्। यो जनः परकीयभाषां भाषते स मानवमुद्दिश्य न भाषित्वा ईश्वरमुद्दिश्य भाषते यत आत्मन आवेशान् निगूढवाक्ये प्रोक्तेपि तत् केनापि
३ न बुध्यते; किन्तु यो नोपदिश्यते तेन मनुजानां निष्ठायै हितोपदेशाय
४ सान्त्वनायै च कथोपदिश्यते। यः परकीयभाषयाचष्टे स निजां निष्ठां

जनयति किन्तु य उपदिशति स समाजस्य निष्ठां जनयति। अतएव यूयं ५
सर्व्वे परकीयभाषां भाषितुं शक्नुयेति कामयेऽहं किन्तु यदुपदेष्टुं शक्नुथ
तदहम् अधिकं कामये ; यतः परकीयभाषाभाषिता यदि समाजस्य
निष्ठामुत्पादयितुं भावार्थं न बोधयति तर्हि तस्माद् उपदेष्टा श्रेयान्
भवति।

हे भ्रातर इदानीं युष्मान् उपगम्य प्रकाशितवाक्यज्ञानकथोपदेशशि- ६
क्षाभिः सम्वलितां कथाम् अकथयित्वा यदि केवलां परभाषां कथयामि
तर्हि युष्माभिः किं लब्धुं शक्यते? अपरं निर्जीववस्तुषु शब्दयित्री वंशीर्भवेद् ७
वल्लकी वा भवेत् तालमाने विना यदि वदति तर्हि किं वाद्यं किं वा गानं
भवति तत् केन बोद्धुं शक्यते? तथा रणतूर्य्या निस्वनो यद्यस्पष्टो भवति ८
तर्हि योद्धुं कः सज्जिष्यते? तद्वत् कथाकथनसमये लोकै र्बोध्यां कथां ९
यदि न कथयथ तर्हि किं कथयथ तत् को बोद्धुं शक्ष्यति?वस्तुतो युष्माकं
कथा गगणाय कथितेव भविष्यति। जगतो मध्ये नितान्तं बहुविधा १०
भाषा विद्यते तासां कापि भाषा निरर्थिका नहि; किन्त्वहं यदि तस्या ११
भाषाया अर्थं बोद्धुं न शक्नोमि तर्हि यो जनः कथयति स मां म्लेच्छं
ज्ञास्यति मम समीपे च स म्लेच्छइव भविष्यति। अपरञ्च यूयं यदि १२
पवित्रस्यात्मनो दानम् ईहध्वे तर्हि येन दानेन समाजस्य निष्ठा जायते
तत् प्रभूतत्वेन प्राप्तुम् ईहध्वं। अतो यो जनः परकीयां भाषां कथयति स १३
यथा तदर्थं बोधयितुं शक्नोति तत् प्रार्थयताम्। यदि परकीयभाषया १४
प्रार्थये तर्ह्यस्मदीय आत्मा प्रार्थयते किन्तु मामकीना विज्ञापनशक्ति र्निष्फला
भवति। तर्हि किम्? अहं मनसा विदित्वा प्रार्थयिष्ये मनसा बोधयित्वा च १५
प्रार्थयिष्ये;अपरं मनसा ज्ञात्वा गास्यामि मनसा बोधयित्वा च गास्यामि।
नो चेत् त्वं यदा धन्यं वदिष्यसि तदाऽशिक्षितो जनस्त्वदीयकथाया १६
भावमबुद्ध्वा तव धन्यवादने कथं तथास्तु, इति वक्तुं शक्नोति? त्वं सम्यग् ईश्वरं १७
धन्यं वदसीति सत्यं तथापि तत्र परेषां निष्ठा न भवति।। युष्माकं सर्व्वेभ्यो- १८
ऽहं बहीं परकीयां भाषां कथयन् ईश्वरं धन्यं वदामि; किन्तु समाजस्य १९

मध्येऽन्यभाषयायुतवाक्यकथनात् येन परेषाम् उपदेशो जायते तादृशं
ज्ञानगम्यपञ्चवाक्यकथनेऽपि प्रीतोऽस्म्यहं।
२० हे भ्रातरो यूयं बोद्धुं बालकाइव मा भूत परन्तु परहिंसायां शिशव-
२१ इव भूत्वा बुद्धा स्थविरनिभा भवत। शास्त्रे यथा लिखितमास्ते

'इत्यवोचत् परेशस्तु भाषया परकीयया।
विदेशिनां मुखैश्चाहं कथयिष्यामि तान् प्रति।
तथापि मे कथायां ते निधास्यन्ति मनांसि न।'

२२ अतएव तत् परकीयभाषाभाषणम् अविश्वासिनः प्रति चिह्नरूपं भवति
न तु विश्वासिनः प्रति; उपदेशोऽपि नाविश्वासिनः प्रति किन्तु विश्वासिनः
२३ प्रत्येव। सर्व्वः समाजो यद्येकस्मिन् स्थाने मिलति सर्व्वे जना भिन्नभाषाः
कथयन्ति च तर्हि कश्चिद् अविज्ञोऽविश्वासी वा तन्मध्यम् आगत्य
२४ युष्मान् उन्मत्तान् किं न वदिष्यति? किन्तु यदा सर्व्वे उपदिशन्ति तदा
यद्येको विश्वासवर्ज्जितो विज्ञानवर्ज्जितो वा समायाति तर्हि निखिल-
२५ लोकै र्विज्ञातो विचारितश्च भूत्वा तस्य मनसो निखिलगुप्तकथायां
व्यक्तीभूतायां सोऽधोमुखः पतन् ईश्वरमाराध्य नितान्तम् ईश्वरो युष्माक-
मेव मध्ये विद्यते कथामेतां कथयिष्यति।
२६ हे भ्रातरो यदा यूयं मिलथ तदा युष्माकं मध्यवर्त्तिनः कस्यचिद्
गीतमास्ते कस्यचिद् उपदेशकथास्ते कस्यचित् परकीया भाषास्ते कस्यचिद्
भविष्यद्वाक्यमास्ते कस्यचिद् अर्थबोधकं वाक्यमास्ते, एतत् किं? सर्व्वमेव
२७ निष्ठार्थं भवेत्। यदि कश्चिद् भाषान्तरं विवक्षति तर्हि पदद्वयात् त्रयाद्
वा नाधिकं कथयित्वा यथाक्रमं वक्ष्यति, अपरो जनस्तदर्थं बोधयेत्।
२८ किन्त्वर्थाभिधायकः कोऽपि यदि न विद्यते तर्हि स समाजे वाचंयमः
२९ तिष्ठन् ईश्वरमुद्दिश्य स्वस्वान्ते स्ववाचं भूयात्। अपरं द्वौ त्रयो वा जना
उपदेष्टार एकैकाम् उपदेशकथां कथयन्तु तदन्ये तस्य विवेचनां कुर्व्वन्तु
३० किन्तु समीपोपविष्टं कञ्चन जनं प्रति यदि काचन कथा व्यक्तीभवति तर्हि
३१ प्रथमजनस्य कथायाः शेषे सति कथयतु, सर्व्वेषामेव शिक्षासान्त्वनयोः प्राप्त्यै

सर्व्वएव यूयम् एकैकश उपदेष्टुं शक्नुथ। उपदेष्टृणां मनांसि उपदेष्टृणाम् ३२
अधीनानि भवन्ति। अपरञ्च पवित्रलोकानां निखिलेषु समाजेषु ईश्वरो ३३
विरोधजनको न भूत्वा शान्तिजनको भवति।

अपरञ्च युष्माकं वनिताः समाजेषु मौनिन्यो भूत्वा तिष्ठन्तु यतः ३४
समाजमध्ये तासां कथाप्रचारणं निषिद्धं ताः शास्त्रानुसारतो निघ्नीभूत्वा
तिष्ठन्तु। किन्तु तासां किमपि प्रष्टव्यीयं यदि भवति तर्हि गेहे ३५
स्वस्वामिनः पृच्छन्तु यतो समाजमध्ये महिलानां कथाप्रचारणम्
अनुचितं भवति।

ईश्वरस्य कथा किं युष्मत्तो निरगमत्? केवलं युष्माकमेव सन्निधौ ३६
प्राकाशि? युष्माकं कश्चन यदि स्वम् उपदेष्टारं पारमार्थिकं वा मनुते तर्हि ३७
युष्मान् प्रति या कथा मया समलेखि सा प्रभोराज्ञेति स उररी कुर्य्यात्।
किन्तु यदि कश्चिद् अज्ञो भवति सोऽज्ञएव तिष्ठतु। हे भ्रातरो यूयम् ३८
उपदेष्टुं प्रयासं कुरुत किन्तु परकीयां भाषां भाषितुं कमपि मा निषे- ३९
धत। विध्यनुसारतः सुपरिपाट्या सर्व्वकर्म्माणि क्रियन्तां। ४०

---

१५ पञ्चदशोऽध्यायः।

१ ख्रीष्टोत्थानकथनं १२ उत्थानानङ्गीकारिणो भर्त्सनं २० ख्रीष्टोत्थानेन तल्लोकानाम् उत्थानावधारणं २९ उत्थाने न सति धर्म्मस्य निष्फलत्वं ३५ उत्थाने शरीरस्य विशेषत्वं ४३ कथम् उत्थानं भविष्यति तस्य निर्णयः ५० शेषदिनाख्यानञ्च।

हे भ्रातरो यः सुसंवादो मया युष्माकं समीपे प्राचारि यञ्च युष्माभि- १
र्गृह्यते येन स्थीयते च पुनरपि तं युष्मान् ज्ञापयामि। मया चकाशिता २
सा कथा यदि युष्माभिः स्मर्य्यते युष्माकं विश्वासश्च यदि वितथो न भवति
तर्हि तेनैव यूयं परित्राणभाजनानि। यस्माद् अहं यान् उपदेशान् ३
अलभे तेषां मुख्यममुम् उपदेशं युष्मासु समार्पयं। युष्माकं पापमोचनाय ४
शास्त्रीयलिखनानुसारतः ख्रीष्टःप्राणान् त्यक्त्वा श्मशानस्थितः सन् शास्त्रीय-
लिखनानुसारेण तृतीये दिवस उपातिष्ठत्। प्रथमं कैफा ततो द्वादश ५
शिष्यै ईदृष्टः; ततः परं कदाचित् पञ्चशतभ्रातृभिरधिकलोकैरपि दृष्टः ६

तेषां केचित् महानिद्रायाम् आपन्ने किन्तु तेषां बहवो लोका अद्यापि
७ विद्यन्ते। तदनन्तरं याकुवा तत्पश्चात् निखिलप्रेरितै र्दृष्टः। सर्व्वशेषे
८ अकालजातेनेव मयापि दृष्टः। किन्त्वीश्वरस्य समाजं प्रति दौरात्म्या-
९ चरणात् प्रेरितलोकानां मध्येऽहमतिक्षुद्रः प्रेरितनाम धारयितुं न
१० योग्योऽस्मि। परन्त्वहं पदे यत् तिष्ठामि तत् केवलम् ईश्वरानुग्रहादेव;
अपरं मह्यं दत्तो योऽनुग्रहः स निष्फलो नाभवत् यस्मादहं सर्व्वेभ्यः
प्रेरितेभ्योऽधिकं श्रमं करोमि किन्तु स श्रमो मया नाकारि मत्सहाये-
११ नेश्वरानुग्रहेणाकारि। अतएव मया भवेत् तै र्वा भवेत् अस्माभिरेव
तादृशी कथा प्रचारिता युष्माभिश्च तादृक्कथायां व्यश्वासि।
१२ ख्रीष्टेन श्मशानाद् उदस्थायि यद्येतस्या वार्त्तायाः प्रचारो भवति तर्हि
मृतलोकानाम् उत्थानं न भविष्यति कथाम् इमां युष्माकं केचित् किं कथ-
१३ यन्ति? यदि मृतलोकानाम् उत्थानं न भवति तर्हि ख्रीष्टस्योत्थानमपि
१४ नाभवत्; यदि ख्रीष्टस्योत्थानं नाभवत् तर्ह्यस्माकं सुसंवादप्रचारणं मृषा
१५ युष्माकं विश्वासोऽपि मृषा। अपरं वयमपीश्वरे मिथ्यासाक्षिणोऽभवाम यतः
परासुलोकानाम् उत्थानं यदि न भवति तर्हि यं ख्रीष्टं ईश्वरो नोदस्थाप-
यत् तम् उदस्थापयत् कथामेतां कथयित्वा वयम् ईश्वरे मृषा साक्ष्यम्
१६ अददाम। परेतलोकानाम् उत्थानं यदि न जायते तर्हि ख्रीष्टस्याप्युत्थानं
१७ नाभवत्। यदि ख्रीष्टोत्थानं नाभवत् तर्हि युष्माकं विश्वासोऽपि मृषा
१८ इदानीं यावद् यूयं पापग्रस्ता आध्वम्। अपरञ्च ये जनाः ख्रीष्टमाश्रित्य
१९ मृतास्ते व्यनश्यन्। ख्रीष्टं प्रत्यस्माकं प्रत्याशा यदि केवलम् ऐहिकी भवति
तर्हि वयं निखिलमानवेभ्यो दुर्भाग्याः।
२० इदानीं ख्रीष्टः श्मशानाद् उत्थापितः स महानिद्रलोकानां प्रथम-
२१ जातफलस्वरूपोऽजायत। यद्वन् मनुजेन मृत्योः सञ्चारो जातवान् तद्वन्
२२ मनुजेन प्रमीतलोकानाम् उत्थानस्य सञ्चारोऽपि जातवान्। आदमा यथा
सर्व्वे मरणाधीना अभूवन् तथा ख्रीष्टेन सर्व्वएव सजीवाः सन्त उत्थास्यन्ति।
२३ किन्त्वेकैको नरो निजे निजे पर्य्याये उत्तिष्ठति प्रथमतः प्रथमजातफलस्वरूपः

ख्रीष्टः, द्वितीयतस्तस्यागमनसमये ख्रीष्टमाश्रिता लोकाः। तदनन्तरं प्रति २४
स सर्व्वं शासनम् अधिपतित्वं पराक्रमञ्च वशीकृत्य यदा स्वपितुरी-
श्वरस्य समीपे राजत्वं समर्पयिष्यति तदैव दिनं शेषं भविष्यति। किन्तु २५
ख्रीष्टो निःशेषरिपून् यावत् स्वपादतलेन न दलयिष्यति शेषो रिपु
र्मृत्युश्च न विनंक्ष्यति तावत् तेन राजत्वं करणीयम्। यत ईश्वरः सर्व्वं तदीय- २६
पादतले स्थापयिष्यति। किन्तु तस्य पादतले सर्व्ववस्तूनि स्थापयिष्यति २७
यः सर्व्वं तन्निम्नं करिष्यति स स्वयं तन्मध्ये गणितो नहि तया कथया
इति स्पष्टं बुध्यते। अपरञ्च सर्व्वेषु तदधीनीभूतेषु यो यस्य पुत्त्रस्य वशे २८
सर्व्वान् स्थापयिष्यति सोपि पुत्त्रः स्वयं तस्य निघ्नो भविष्यति तत ईश्वरः
सर्व्वेषु सर्व्वं भविष्यति।

अपरञ्च चेत् प्रमीतलोका नोत्थास्यन्ति तर्हि ये परेतलोकानां पदे २९
मज्जितास्तैः किं लप्स्यते? अपरं ते प्रमीतानां पदे कुतो मज्जिताः? वयं वा ३०
दण्डे दण्डे कुतो मृत्युमुखगताः? अस्माकं प्रभुना यीशुख्रीष्टेन युष्मन्निमित्तो ३१
मम य आनन्दस्तेन शपथं कृत्वा कथयामि दिने दिनेऽहं मृत्युमुखागतो
भवामि। यदि मृतलोकानाम् उत्थानं न भवति तर्हि मनुजानां रीत्यनु- ३२
सारत इफिषनगरे वन्यपशुभिः सार्द्धं मया यद्ययोधि तेन मम को
लाभः? वरं श्वोऽस्माकम् आयुषः शेषो भविता वयम् अद्याश्नीमः पिवामश्च।
न भ्राम्यत 'कुसंसर्गेण लोकानां शुभं कर्म्म विनश्यति।' किल्विषं प्रति ३३
पराङ्मुखीभूय धर्म्मतु सचैतन्यास्तिष्ठत; यतो युष्माकं कस्यापीश्वरे तत्त्वज्ञानं ३४
न विद्यते यदिदं वाक्यं वदामि तद् युष्माकं त्रपास्पदम्।

अपरः कश्चिद् ईदृशीं गिरं प्रक्ष्यति परासुलोकाः कथम् उत्थास्यन्ति? ३५
ते कथं वा विग्रहवन्त उत्थास्यन्ति? हे अज्ञ त्वया यद्वीजम् उप्यते तस्मिन् न ३६
मृते तस्माद् अङ्कुरो न जायते। यच्च निर्गमिष्यति तत् त्वं न वपसि गोधूमं ३७
इतरद् वीजं वा त्वं केवलवीजं वपसि, तत ईश्वरः स्वेच्छानुसारतो वीजाद् ३८
आकृतिमुत्पादयति, अर्थात् तस्माद् एकैकशो वीजाद् विशेषं विशेषम्
आकारं उत्पादयति। अपरञ्च सर्व्वाणि शरीराणि नैकविधानि मनुष्यपशु- ३९

४० पक्षिमत्स्यादीनां पृथक् पृथक् शरीराणि सन्ति। अपरम् आकाशस्थं पृथिवी-
स्थञ्च वस्तु विद्यते किन्तु पृथिवीस्थवस्तुन एकविधं तेज आकाशस्थवस्तुनस्त-
४१ दन्यप्रकारं तेजः; अर्थात् सूर्य्यस्य तेज एकविधं चन्द्रस्य तेजोऽन्यथा नक्ष-
त्राणां तेजश्चान्यथा; विशेषतो नक्षत्राणां मध्येऽपि तेजसस्तारतम्यं विद्यते।
४२ इत्थं प्रमीतलोकानाम् उत्थानमपि भविष्यति।
४३ नश्वरशरीरम् उप्यते किन्तु तस्माद् अनश्वरं शरीरम् उत्थास्यति
४४ अपमानितम् उप्यते किन्तु गौरवान्वितम् उत्थास्यति; तथा निर्ब्बलम्
उप्यते किन्तु सबलम् उत्थास्यति पार्थिवं शरीरम् उप्यते किन्तु स्वर्गीयं
४५ शरीरम् उत्थास्यति। पार्थिवं स्वर्गीयञ्च द्विविधे शरीरे भवतः; तच्च
लिखितमित्थमास्ते आदिपुरुष आदम् जीवत्प्राणी किन्तु शेष
४६ आदम् (ख्रीष्टो) जीवनदायक आत्मा। प्रथमतः स्वर्गीयपुरुषो नहि
४७ किन्तु प्रथमतः पार्थिवपुरुषः पश्चात् स्वर्गीयपुरुषः। आदिपुरुषो
मृद उत्पन्न पार्थिव आसीत् किन्तु द्वितीयः पुरुषः स्वर्गादेत्य
४८ प्रभुरभवत्। अतएव पार्थिवपुरुषतो जाता ये लोकास्तेऽपि पार्थिवाः
४९ स्वर्गीयपुरुषत उत्पन्ना ये लोकास्ते स्वर्गीया भवन्ति। यथा वयं
पार्थिवमानुषस्याकारवन्त आस्महे तथा स्वर्गीयपुरुषस्याकारवन्तो
भविष्यामः।

५० हे भ्रातरो युष्मान् प्रति व्याहरामि रक्तमांसवत् शरीरं कदापी-
श्वरराज्यं न लभते यस्माद् अनश्वरतायां नश्वरताया अधिकारः कदापि
५१ न जायते। पश्यत युष्माकं निकटेऽहं काञ्चिन् निगूढां कथां प्रकाशये।
५२ वयं सर्व्वे मानवाः सर्व्वदा महानिद्रायां न स्थास्यामः किन्तु शेषे दिने
यदा तूरीवाद्यस्य शब्दो भविष्यति तदैकविपले निमिषैकमध्ये वा भिन्न-
रूपा भविष्यामः, अर्थात् श्मशानस्था मृतलोका अमराः सन्त उत्थास्यन्ति
५३ वयञ्च भिन्नरूपा भविष्यामः। यत एतेन नश्वरवपुषा अनश्वरतारूपं वासः
५४ परिधातव्यं। अतएवानेन नश्वरशरीरेणानश्वरत्वरूपवाससि परिहिते
सति, अर्थाद् एतेन मानवदेहेनामरत्वरूपे वाससि परिहिते यदेतद् वचनं

लिखितमास्ते तत् प्रत्यक्षं भविष्यति यथा 'जयो मृत्युं ग्रसिष्यति।'
हे मृत्यो तव कण्टकं कुत्र? हे परलोक तव जयः कुत्र? मृत्योः कण्टकं ५५
पापं पापस्य बलं व्यवस्था किन्त्वस्माकं प्रभुना यीशुख्रीष्टेन य ईश्वरो- ५६
ऽस्मान् जयवतः करोति तस्यैव धन्यवादो भवतु। अतो हे मम प्रिय- ५७
भ्रातरः प्रभोः सेवायां युष्माकं परिश्रमो विफलो न भविष्यति, इति ५८
विदित्वा यूयं प्रभोः कर्म्मणि सुस्थिरा निश्चलाः सदा यत्नवन्तश्च तिष्ठत।

---

१६ षोडशोऽध्यायः।

१ दानं कर्त्तुं पौलस्योपदेशः १० अपल्लोतिमथ्योः पौलस्य कथनं १५ स्तिफान-प्रभृतिषु भ्रातृषु पौलस्य कथनं १९ नमस्कारप्रेषणं समाप्तेः कथनञ्च।

पवित्रलोकानां निमित्तं गालातीयदेशस्य सर्व्वसमाजान् प्रति १
धनोत्तोलने यादृग् आदिशं तदनुसारेण यूयमपि कुरुत, अर्थात् मदुप- २
स्थितिसमये धनोत्तोलनं न भवितुं यूयम् एकैकशो लाभानुसारतो धनं
सञ्चित्य सप्ताहस्य प्रथमदिवसे स्वसमीपे किञ्चित् किञ्चित् स्थापयत। ततो ३
मदुपस्थितिसमये यूयं यानेव विश्वास्यानिति वेदिष्यथ तेभ्यः पत्रं दत्त्वा
तै द्वारभूतैरहं युष्माकं तद्दानं यिरूशालमं प्रेषयिष्यामि। किन्तु यदि ४
तत्र मम गमनम् उचितं भवति तर्हि ते मया सार्द्धं यास्यन्ति।
माकिदनियादेशेन मया गन्तव्यं यदा तु तेन देशेन गमिष्यामि तदा ५
युष्माकं सन्निधिना व्रजिष्यामि। अपरं कतिपयदिनानि विलम्ब्य यदि ६
भवति तर्हि शीतकालस्य शेषं यावद् युष्माकम् अन्तिके स्थास्यामि
पश्चाद् मम यत्र गमनीयं तत्रैव युष्माभिः प्रेरितव्योऽहं। यतो ७
मध्येमार्गम् एकक्षणएव युष्मान् साक्षाद् विधाय व्रजामीति नाहम् अभि-
लष्ये किन्त्वीश्वरो यद्यनुजानीते तर्हि युष्माभिः साकं कतिपयदिनानि
वस्तुं कामयेऽहम्। तथापि निस्तारोत्सवात् पूर्व्वं पञ्चाशत्तमदिनं यावद् ८
इफिषपुर्य्यां मया स्थायिष्यते। यस्माद् बहुप्रतिबन्धके सत्यपि कार्य्य- ९
साधकं बृहद्द्वारम् अमुच्यत।
तिमथि र्यदि युष्माकं समीप उपतिष्ठति तर्हि येन स निर्भीतिस्तिष्ठति १०

तत्र युष्माभि र्मनो निधीयतां यस्माद् अहं यादृक् सोपि तादृक् प्रभोः
११ कर्म्मणे यतते। कोपि तमसमादरं न कुर्य्यात् किन्तु स ममान्तिकं यथा
गन्तुं शक्नोति तथानुमत्य तं सकुशलं प्रेषयत भ्रातृभिः सार्द्धम् अहं तम-
१२ पेक्षे। अपल्लोभ्रातरि मया लिख्यते भ्रातृभिः साकं युष्माकं समीपं
ब्रजितुं स बहु व्यनायि किन्त्विदानीं गन्तुं केनापि प्रकारेण तेन नाभि-
१३ लष्यते तथापि सुयोगे सत्यवश्यं यास्यते। यूयं सचैतन्याः सन्तः ख्रीष्टस्य
१४ धर्म्मे सुस्थिरा भवत तथा पौरुषं प्रकाश्य बलवन्तो भवत। प्रेम्ना सर्व्वाणि
कर्म्माणि निष्पाद्यन्तां।

१५ हे भ्रातर आखायादेशस्य प्रथमफलस्वरूपस्य स्तिफानस्य परिवाराः
१६ पवित्रलोकान् सेवन्ते यत् तद् युष्माभि र्ज्ञायते। अतएव यूयम् एतादृश-
लोकानाम् अस्माकञ्च सहायानां श्रमकारिणाञ्च वश्या भवत युष्मान् इति
१७ विनयेऽहम्। स्तिफानः फर्त्तुनात आखायिकश्च यद् अत्रागमन् तेनाह्ला-
१८ दितो ऽभवम् यस्माद् युष्माभि र्यद् ऊनितं तत् तैः सम्पूरितम्। तैर्दारै
र्युष्माकं मम च मनांसि समाप्यायन्त तस्माद् युष्माभिरेतादृशा लोका
मान्यन्ताम्।

१९ युष्मभ्यम् आशियादेशस्थसमाजानां नमः आकुलप्रिस्किल्लयोस्तन्मण्डपस्थ-
२० समाजस्य च बहुनमः प्रजानीत। सर्व्वे भ्रातरो युष्मान् नमस्कुर्व्वन्ति। यूयं
२१ पवित्रचुम्बनेन मिथो नमत। पौलोऽहं स्वकरलिखितं नमो युष्मान् वेदये।
२२ यदि कश्चिद् यीशुख्रीष्टे न प्रीयते तर्हि स शापग्रस्तो भवेत् प्रभुरायाति।
२३ अस्माकं प्रभो र्यीशुख्रीष्टस्य अनुग्रहो युष्मान् प्रति भूयात्। ख्रीष्टं यीशुं
२४ आश्रितान् युष्मान् प्रति मम प्रेम तिष्ठेत्। इति।

# करिन्थिनः प्रति पौलस्य द्वितीयं पत्रम्।



## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं २ ख्रीष्टस्य शिष्याणां दुःखे सुखबोधः १२ करिन्थीयसमाजं प्रति प्रेरितानामाचरणं १५ तेषां समीपं प्रति पौलस्य गमननिश्चयः २२ तस्य गमनस्य कारणनिर्णयश्च।

ईश्वरेच्छया यीशुख्रीष्टस्य प्रेरितः पौलस्तिमथियश्च द्वावेतौ करिन्थ- १
नगरीयेश्वरसमाजाय आखायादेशीयेभ्यः सर्व्वपवित्रलोकेभ्यश्च पत्रं
लिखतः। अस्माकं तात ईश्वरः प्रभुयीशुख्रीष्टश्च युष्मभ्यो ऽनुग्रहशान्ती २
देयास्ताम्।
कृपाया आकरः सर्व्वशान्तिदाता च योऽस्माकं प्रभुयीशुख्रीष्टस्य तात ३
ईश्वरः स धन्यो भवतु। वयम् ईश्वराद् यां सान्त्वनां प्राप्य शान्तिमन्तो ४
भवामः, तया सान्त्वनया यथा दीनलोकानां सान्त्वनां जनयितुं शक्नुम-
स्तदर्थं सोऽस्माकं नानाप्रकारदुःखभोगसमये शान्तिं जनयति। यद्वत् ५
ख्रीष्टस्येवास्माकं बहुदुःखानि घटन्ते तद्वत् ख्रीष्टेन वयं बह्वीः सान्त्वना
लभामहे। अतएव यदि वयं दुःखिनो भवामस्तर्हि यद्दुःखम् अस्मान् ६
प्रति घटते तादृशस्य दुःखस्य सहनाद् युष्माकं सान्त्वना परित्राणञ्च
निष्पद्येते तथा वयं यां सान्त्वनां प्राप्नुमः सापि युष्माकं सान्त्वनायै परि-
त्राणाय च भवति। अपरं तेनैव यूयं यथा दुःखानां भागिनो भवथ ७
तथा सान्त्वनाया अपि भागिनो भविष्यथ इति विदित्वा युष्मास्वस्माकं
गाढप्रत्याशा विद्यते। हे भ्रातर आशियादेशेऽस्माकं शरीरतिशयो ८
ऽपरिमितश्च यो दुःखभारो ऽस्मदुपरि पतितवान् स युष्माभि र्न ज्ञायत
इत्युचितं नाविद्म। तदास्माकं जीवनस्थितेः कापि सम्भावना नासीत् ९
वस्तुतो वयं स्वेषु विश्वासम् अकृत्वा यथा प्रमीतलोकानाम् उत्थापयिता
य ईश्वरस्तस्मिन्नेव विश्वासं कुर्म्मस्तदर्थं स्वान् मृत्युवशं गतान् इति ज्ञात-
वन्तः। एतादृशभयङ्करान् मृत्यो र्यो ऽस्मान् अत्रायत, इदानीमपि त्रायते १०
स इतः परमप्यस्मान् त्रास्यते ऽस्माकम् एतादृशी प्रत्याशा विद्यते।

११ किन्त्वनेकेषां प्रार्थनातो ऽस्मभ्यम् अनुग्रहः क्रियते तस्माद् अनेके यथेश्वरं
धन्यइति वदन्ति तदर्थं यूयं प्रार्थनयास्मान् उपकुरुत।
१२ अपरञ्च सांसारिक्या धिया नहि किन्त्वीश्वरस्यानुग्रहेण वयं निखि-
लान् प्रति विशेषतो युष्मान् प्रति सनिष्कपटत्वं ससारल्यञ्चाचरामि,
१३ अत्रास्माकं मनांसि साक्षीणि यत् सन्ति तदस्माकम् आह्लादास्पदं। अपरं
या या कथा युष्माभिः पठ्यते स्वीक्रियते च मयानुमीयते सा शेषकालं
यावत् स्वीकारिष्यते तद् विना युष्मान् प्रति किमपि नास्माभि र्लिख्यते।
१४ यथा प्रभो र्यीशो र्दिने यूयमस्माकम् आनन्दं जनयिष्यथ तथा
वयं युष्माकम् आनन्दं जनयामहे कथामेताम् अस्मासु यूयम् अंशतः
स्वीकुरुथ।
१५ अपरञ्च युष्माकं निकटेनाहं माकिदनियादेशं व्रजिष्यामि ततस्तस्माद्
द्वितीयवारं युष्माकम् अन्तिकेन समागमिष्यामि युष्माभि र्यिहूदीयदेशं
१६ प्रति प्रेरिष्ये, एतया प्रत्याशया युष्माकं द्वितीयमङ्गलार्थं पूर्व्वं युष्माकं
१७ समीपं गन्तुं मतिं कृतवान्। एतादृशीं मतिं कृत्वा किमहं सचाञ्च-
ल्यम् व्याप्रिये वस्तुतो यत् कर्म्म कर्त्तुं निश्चिनोमि तत् किं विषयिलो-
१८ कादिव पूर्व्वं स्वीकृत्य पश्चाद् अस्वीकृत्य निश्चिनोमि? तन्न ईश्वरो यथा
सत्यस्तथास्माभि र्युष्मान् प्रति कथितं यद्वाक्यं तत् स्वीकृतास्वीकृतं
१९ नासीत्। यतोऽस्माभिरर्थात् मया सिल्वानेन तिमथिना च युष्माकम्
अभ्यर्णे ईश्वरस्य पुत्त्रो यो यीशुख्रीष्टो यद्वाक्यं प्रचारि तत् स्वीकृतास्वीकृतं
२० नासीत् किन्तु तस्मिन् स्वीकृतमेवासीत्। यस्माद् अस्माभि र्यथा महि-
मेश्वरस्य प्रकाशते तदर्थं तस्मिन् ईश्वरेण यावत्यः प्रतिज्ञाः सन्ति ताः
२१ सकलाः स्वीकृताः सत्याश्चाभवन्। युष्मान् अस्मांश्चाभिषिच्य ख्रीष्टे स्थास्नून्
२२ अकरोद् य ईश्वरः सोऽस्माकम् अन्तःकरणेषु पूर्व्वभुक्तिस्वरूपं पवित्रम्
आत्मानं प्रदायास्मान् मुद्राङ्कितान् अकार्षीत्।
२३ अपरञ्च केवलं युष्मासु दयां कृत्वा एतावत्कालं यावत् करिन्थनगरं
२४ न गतवानहम् ईश्वरं साक्षिणं कृत्वा मया स्वप्राणानां शपथः क्रियते। युष्माकं

विश्वासोपरि वयं नाधिपतित्वं कुर्म्मः किन्तु युष्माकम् आनन्दस्य सहायत्वं कुर्म्मः, यस्माद् विश्वासेन युष्माकं स्थिति र्भवति।

---

## २ द्वितीयोऽध्यायः।

१ पौलस्योपस्थितौ यथा दुःखं न जायते तदर्थं बहिष्कृतलोकान् ग्रहीतुं मन्त्रणं १२ सुसंवादप्रचारणेन पौलस्य कर्म्मणः सफलत्वञ्च।

अपरञ्च युष्मान् दुःखिनः कर्त्तुं पुन र्युष्माकं सन्निधिं न गमिष्यामि, १
इति मनसि निरचैषम्। यस्माद् अहं यदि युष्मान् क्लेशिनः करोमि तर्हि २
यो मया क्लिश्यते तं विना को ऽपरो मां सुखिनं कर्त्तुं शक्नोति? अस्माकम् ३
आह्लादादेव युष्माकं सर्व्वेषाम् आह्लादो जायत इति निश्चितम् अबोधि;
अतएव मदुपस्थितिसमये यै र्मम सुखं भवितुमुचितं चेत् तै र्मम दुःखं
जायत इतिहेतो र्युष्मभ्यम् एतादृशं पत्रम् अलेखि। वस्तुतस्तु बहुदुःखानि ४
मर्म्मवेदनाञ्च प्राप्य बह्वश्रुपातं पत्रमेकं लिखितवान् तेन युष्मान् दुःखिनः
कर्त्तुं नहि किन्तु युष्मासु मदीयप्रेमबाहुल्यं युष्मान् ज्ञापयितुमेव। अतएव ५
यो जनो मां दुःखिनं करोति स केवलं युष्माकं कतिपयलोकै र्मां दुःखिनं
करोति सर्व्वेषु युष्मासु दोषमारोपयितुं नेच्छामि। बहुभि र्दत्तो यो ६
दण्डस्तेनालम्भि सएव तस्य प्रचुरः। अतः स यथा दुःखार्णवे न निम- ७
ज्जति तदर्थं युष्माभिः स क्षन्तव्यः सान्त्वयितव्यश्च। इतिहेतो र्विनीय ८
कथयामि युष्माभिस्तेन सार्द्धं प्रणयः क्रियताम्। अपरञ्च सर्व्वेषु कर्म्मसु ९
यूयम् आदेशं गृह्लीथ नवेति प्रमाणयितुं युष्मान् प्रति लिखितवान्।
युष्माभि र्यस्य यो दोषः क्षम्यते स दोषो मयापि क्षम्यते यश्चाहं किञ्चित् १०
क्षमे तर्हि ख्रीष्टस्य प्रतिनिधिः सन् युष्मदर्थं क्षमे; शैताना वयं वञ्चिताः ११
न भवामः यतस्तस्य कल्पनास्माभिरज्ञाता नहि।

अपरञ्च ख्रीष्टीयसुसंवादं प्रचारयितुं त्रोयानगरम् आगते सति प्रभुना १२
सुयोगरूपद्वारे मुक्तेपि स्वभ्रातरं तीतम् अदृष्ट्वा मनस्स्थैर्य्यं नालभेऽहम्। अत- १३
एव तै र्विसृष्टः सन् माकिदनियादेशं प्रति प्रातिष्ठेऽहम्। य ईश्वरः सर्व्वदा १४
ख्रीष्टेनास्मान् जयिनः करोति तथास्माभिस्तस्य ज्ञानसुगन्धिं सर्व्वत्र

१५ प्रकाशयति स धन्यः। यस्मात् त्राणभाजनानि दण्डभाजनानि च प्रति
१६ वयम् ईश्वरेण ख्रीष्टस्य सुरभिस्वरूपा भवामः। कांश्चित् प्रति वयं मृति-
दातारो मृतिस्वरूपा गन्धा भवामः; कांश्चित् प्रति वयं जीवनदातारो
१७ जीवनरूपगन्धा भवामः किन्त्वेतादृशकर्म्मसाधनयोग्यः कोऽस्ति? ये ये
लोका ईश्वरस्य वाक्येऽन्यन् मिश्रयन्ति वयं तादृशा न भवामः किन्त्वीश्वरं
प्रत्यक्षं विज्ञाय तस्याज्ञानुसारतः सारल्येन ख्रीष्टस्य कथां कथयामः।

---

## ३ तृतीयोऽध्यायः।

१ करिन्थिनः पौलस्य प्रशंसापात्राणि ४ मुसाव्यवस्थाप्रचारणात् ख्रीष्टस्य सुसंवाद प्रचारणं वरं १२ दृष्टान्तेन तत्कथायाः प्रमाणञ्च।

१ वयं किं स्वान् प्रशंसितुं पुनरारभामहे? अपरम् इतरेषाम्इव युष्मान् प्रति
२ यद्वा युष्मत्तो यशोवर्णनपत्राणामस्माकं प्रयोजनं किं विद्यते? युष्माकम्
अन्तःकरणेषु लिखितं निखिलमानवैः पठितं विदितञ्चास्माकं पत्रस्वरूपा
३ यूयमेव जाताः। तत्पत्रं मस्या लेखन्या च लिखितं नहि किन्त्वमरेश्वरस्या-
त्मना लिखितम् अपरञ्च शिलायाम् अतक्षितं सत् क्रव्यमये हृदये तक्षितम्
अभवत् तस्मात् अस्माभिर्लिखितख्रीष्टीयपत्रस्वरूपा यूयमिति सर्व्वेषां
समीपे प्रकाशते।

४ ख्रीष्टेनेश्वरं प्रत्यस्माकम् ईदृशो गाढविश्वासो विद्यते; वयं निज-
५ गुणेन किमपि कर्त्तुं योग्या इति न किन्त्वीश्वराद् अस्माकं योग्यत्वम्।
६ अपरञ्च सोऽस्मभ्यं, व्यवस्थासेवनसामर्थ्यम् अदत्त्वा आत्मनो नवीननियम-
सेवनसामर्थ्यं दत्तवान् यतो व्यवस्था मृत्युदण्डं ददाति किन्त्वात्मा
७ जीवनं ददाति। यदि पाषाणे तक्षिताया मृतिजनिकाया व्यवस्थायाः
प्रदानम् ईदृक् तेजस्वि जातं यथेस्रायेलीयलोका अमुष्याचिरस्थायिन-
८ स्तेजसः कारणान् मुसामुखं द्रष्टुं न शेकुः, तर्हि तस्माद् आत्मप्रदानम्
९ अधिकतेजस्वि किं न भविष्यति? यस्माद् दण्डाज्ञापनस्य यत् तेजस्तस्मात्
१० पुण्यप्रदानस्य तेजः किम् अधिकं न भविष्यति? तस्माद् भविष्यदुत्कृष्टस्य
११ तेजसः तुलनायां कृतायां तत् पूर्व्वीयं तेजो निस्तेजो भवति। यस्य लोपो

भविष्यति तत्तेजो यदि तेजस्वि जातं तर्हि चिरस्थायि तेजोऽवश्यं
ततोधिकतेजस्वि भविष्यति।

ईदृक्प्रत्याशाया: स्थित्या वयम् अतिप्रगल्भेन सर्व्वां कथां कथयामः। १२
इस्रायेलीयलोका यथा तदचिरस्थायितेजसः शेषं न प्रेक्षन्ते तदर्थं मुसा १३
यादृक् स्वमुखं प्राच्छादयत् वयं तादृङ् न कुर्म्मः। तेषां मनांस्यन्धी- १४
कृतान्यभवन् यस्मात् तस्य पूर्व्वीयनियमस्याख्याने पठितेऽद्य यावत् तत्
प्रच्छादनं तिष्ठति। ख्रीष्टेन तस्य लोपोऽभवद् इत्यज्ञातत्वाद् अद्यपर्य्यन्तं १५
यदा मुसाव्यवस्थाग्रन्थः पठ्यते तदा तेन प्रच्छादनेन तेषां मनांसि समा-
व्रियन्ते। किन्तु प्रभुं प्रति मनसि परावृत्ते तत् प्रच्छादनं दूरीकारिष्यते। १६
यस्मात् प्रभुरात्मा प्रभोरात्मा च यत्र तत्रैव मुक्तिः। वयं सर्व्वे ऽनावृत- १७
मुखेन प्रभोस्तेजो दर्पणे इव विलोक्य प्रभोरात्मना क्रमात् तत्सदृशीं तेजो- १८
मयीं मूर्त्तिं प्राप्नुमः।

---

४ चतुर्थोऽध्यायः।

१ सुसंवादप्रचारणाय पौलस्य सारल्यम् उद्योगश्च ७ प्रचारणे तस्य बहुदुःखं १२
किन्तु तद् दुःखं तस्य माङ्गल्याय हिताय च।

अपरञ्च वयं करुणाभाजनानि भूत्वा यदेतत् सेवनपदम् अलभामहि १
नाच क्लाम्यामः किन्तु त्रपाकरं गोपनीयं कर्म्म विहाय सकौटिल्यम् अना- २
चर्य्य चातुर्य्या ईश्वरस्य वाक्यम् अप्रचार्य्य ईश्वरं प्रत्यक्षं प्रमत्य सत्यत्व-
प्रकाशेन सर्व्वेषां मनोगोचरे स्वान् संस्थापयामः। तत्र यद्यस्माभिः ३
प्रकाशितः सुसंवादः कस्यापि सन्निधावस्पष्टो भवति तर्हीश्वरस्य प्रति-
मूर्त्तिस्वरूपस्य ख्रीष्टस्य तेजोमयसुसंवादस्य प्रभां यथा द्रष्टुं न प्राप्नोति,
तदर्थम् एतज्जगतः पति र्येषामविश्वासिनां ज्ञाननयनम् अन्धीकृतवान् ४
तादृशानां त्राणहीनानां समीपएव सोऽस्पष्टस्तिष्ठति। वयम् अस्मदीया- ५
ख्यानम् अप्रचार्य्य प्रभो र्यीशुख्रीष्टस्य, तथा यीशोः सेवार्थं वयं युष्माकं
सेवका:-इत्याख्यानं प्रचारयामः। यीशुख्रीष्टस्य वदनात् प्रकाशते यद् ६
ईश्वरस्य महिमयुक्तं ज्ञानरूपं तेजः तद् दर्शयितुं मध्येतिमिरं प्रभां प्रका-

शितुम् आदिशद् य ईश्वरः सोऽस्माकं मनोमध्ये प्रभां प्रकाशितवान्।
७ अपरञ्च सामर्थ्यरूपस्य धनस्योत्कृष्टत्वम् अस्मान् प्रति न भवद् ईश्वरं
प्रति यथा भवति तदर्थं मृन्मयभाजनानीव वयं तस्य धनस्याधारस्वरूपा
८ अभवाम। तत्र पदे पदे विपद्ग्रस्ता अपि नाधिमन्तो भवामः; उपायहीना-
९ स्सापि निराशा न भवामः; ताडितास्साप्यनाथा न भवामः; अधः पातिता
१० अपि न नश्यामः। यीशुर्जीवति, अस्माकम् एतस्मिन् विग्रहे तद् यथा
प्रकाशते तदर्थं प्रभु यीशुरिव वयं प्रत्यहं मृतिवशीभूताः भ्रमामः।
११ यीशु र्जीवति, अस्माकम् एतस्मिन् मर्त्यदेहे तद् यथा प्रकाशते तदर्थं वयं
१२ सजीवाः सन्तो नित्यं यीशुर्निमित्तं मृत्यौ समर्पिताः। इत्थं वयं मृति-
ग्रस्ताः किन्तु यूयं प्राप्तजीवनाः।
१३ 'विश्वासकारणादेव समभाषि मया वचः।'
यदेतत् शास्त्रोक्तं वचनं विद्यते तद्वद् अस्माभिरपि विश्वासजनकम्
१४ आत्मानं प्राप्य विश्वस्यते,तस्मात् कथा प्रचार्य्यते। यः प्रभुं यीशुम् उद-
स्थापयत् स यीशुनास्मानपि समुत्थाप्य स्वस्य साक्षाद् युष्माभिः सार्द्धम्
१५ अस्मान् उपस्थापयिष्यति, एतद् वयं जानीमः। अतएव युष्माकं हितार्थं
सर्व्वमेव भवति तस्माद् अनेकैरनेकानुग्रहप्राप्ते र्बहुलोकानां धन्यवादाद्
१६ ईश्वरस्य महिमा यथा प्रकाशते तदर्थम् अस्माभि र्न क्लाम्यते, किन्त्वस्माकं
वाह्यः पुरुषो यद्यपि नित्यं क्षीयते तथाप्यस्माकम् अन्तरस्थः पुरुषो दिने
१७ दिने वर्द्धते। यद्वस्तु प्रत्यक्षं तत् क्षणमात्रस्थायि किन्तु यद्वस्तु प्रत्यक्षं नहि
१८ तद् अनन्तकालस्थायि। अपरं प्रत्यक्षाणि वस्तूनि न विलोक्य अप्रत्यक्षाणि
वस्तूनि निरीक्ष्य, काले यापिते ऽस्माभिरस्माकं क्षणमात्रस्थायि यदेतद्
लघिष्ठं दुःखं तद् बाहुल्येनास्माकम् अनन्तकालस्थायिनो गरिष्ठसुखस्य
साधकं भवति।

५ पञ्चमोऽध्यायः।

१ विचारदिवसेऽनन्तायुः प्राप्तिमपेक्ष्य सुसंवादप्रचारणे पौलस्य परिश्रमः ११ तस्या-
चारप्रचारनिर्णयश्च।

१ अपरम् अस्माकम् एतस्मिन् दूष्यरूपे पार्थिवगृहे भग्ने सत्यपि ईश्वरेण

निर्म्मितम् अकरकृतम् अनन्तकालस्थाय्यस्माकम् एकम् अजरं गृहं स्वर्गे
विद्यते, इति वयं जानीमः। तस्माद् एतस्मिन् वेश्मनि तिष्ठन्तस्तस्मिन् २
स्वर्गस्थे वेश्मनि वसनप्रत्याशया कातर्य्योक्तिं कुर्म्मः;अस्मात् तत्प्राप्य वयं ३
निराश्रया न भवामः। वयम् एतस्मिन् पार्थिववेश्मनि उषित्वा वृहद्भारा- ४
क्रान्ताः सन्तः कातर्य्योक्तिं कुर्म्मः;वयमेतद् वेश्म त्यक्तुम् अभिलष्याम इति
नहि किन्त्वजरं वेश्म लब्धुमिच्छामः;ततो जीवनेन मरणं ग्रसिष्यते। अप- ५
रम् अस्माकं मनसाम् ईदृशं भावम् उत्पादयति य ईश्वरः स पूर्व्वेतनस्वरूपं
स्वीयमात्मानम् अस्मभ्यम् अददात्। अतएव वयं सर्व्वदा सोद्योगा भवामो ६
ऽपरम् एतस्मिन् विग्रहे यावत् उपतिष्ठामः, तावत् प्रभोः समीपे नोपति-
ष्ठाम इति विज्ञाय दृष्ट्वा नाचर्य्य विश्वासेन आचरामः। अपरञ्च विग्रहे- ७
ऽनुपस्थाय प्रभोः समीपे यदुपस्थानं तदेव श्रेयो विदित्वा वयम् अक्षोभा ८
भवामः। अस्माद् उपस्थिता अनुपस्थिता वा वयं यथा तेन गृह्यामहे ९
तदर्थं यतामहे। यस्माद् अस्माकम् तनुभिः कृतस्य एकैकस्य कर्म्मणः १०
शुभाशुभफलप्राप्तये ख्रीष्टस्य विचारासनसम्मुखे सर्व्वैरस्माभिरुपस्थातव्यम्।

अतएव प्रभो भयानकत्वं विज्ञाय वयं मनुष्यान् प्रवर्त्तयामहे यथा ११
वयम् ईश्वरस्य गोचरे प्रकाश्यामहे युष्माकं ज्ञानगोचरेऽपि प्रकाश्यामहइत्य-
नुमामः। अनेन वयं युष्माकं सन्निधौ पुनः स्वान् प्रशंसाम इति नहि किन्तु १२
ये मानसिकं वाक्यं विना मौखिकं वाक्यं श्लाघन्ते तेषां वाक्यस्य
प्रत्युत्तरदानाय अस्मासु श्लाघायाः कारणं कथयितुञ्च महोपायं ज्ञाप-
यामः। यदि वयं हतज्ञाना भवामस्तर्हि तद् ईश्वरार्थं, यदि च सज्ञाना १३
भवामस्तर्हि तद् युष्मदर्थम्। वयं ख्रीष्टस्य प्रेम्ना समाकृष्यामहे यतो १४
यद्येको जनो निखिलनिमित्तम् अम्रियत तर्हि निखिला मृताः,एतद्
वयं निश्चितम् अज्ञासिष्म। अपरञ्च तेन ये जीवनं प्राप्नुवन्ति ते स्वार्थं न १५
जीवित्वा यस्तेषां कृतेऽम्रियत श्मशानाद् उदतिष्ठच्च तदर्थं यथा जीवन्ति
एतदर्थं स सर्व्वेषां कृते मृतवान्। अतएव जात्यनुरोधात् कमपि न मन्या- १६
महे यद्यपि पूर्व्वं जात्यनुरोधात् ख्रीष्टम् अमन्यामहि तथाप्यद्यारभ्य न

१७ मंस्यामहे। यदि कश्चित् ख्रीष्टम् आश्रयते तर्हि स नवीनसृष्टस्वरूपो भवति;
१८ तस्य पुरातनानि लुप्यन्ते पश्य निखिलानि नवीनानि भवन्ति। किन्तु
यीशुख्रीष्टेन स्वेन सार्द्धम् अस्मान् मेलयित्वा मेलनवार्त्ताप्रचारणपदम्
१९ अस्मासु समार्पयद् य ईश्वरः स एतानि सर्व्वाणि साधयति। इत्थं ईश्वरो
जगतो जनानाम् आगांसि न गणयित्वा ख्रीष्टेन स्वेन सह तान् अमेलयत्
२० तान्मिलनकथाम् अस्मभ्यं दत्तवान्। अतो वयं ख्रीष्टार्थं दौत्यं कर्म्म सम्पा-
दयामहे, अपरम् ईश्वरोऽस्माभि र्युष्मान् साधयतीव वयं ख्रीष्टार्थम्
२१ इति युष्मान् विनयामहे युष्माभिरीश्वरेण सार्द्धं मिल्यताम्। यतो वयं
यथा ख्रीष्टेनेश्वरदत्तपुण्यस्वरूपा भवामस्तदर्थं येन सह कलुषस्य कोऽपि
सम्पर्को नासीत् तमेव कलुषस्वरूपं कृतवान्।

६ षष्ठोऽध्यायः।

१ सुसंवादप्रचारणे पौलस्य विश्वास्यता। १४ देवपूजकैः सार्कं मित्रताप्रतिषेधश्च।

१ यूयम् ईश्वरस्यानुग्रहं निष्फलं मा गृह्लीत तस्य सहाया वयं युष्मान् इति
२ विनयामहे। स कथयति

'शुभकाले त्वदीयातु प्रार्थना संश्रुता मया।
तावकीनोपकारस्य त्राणस्य दिवसे कृतः।
पश्यायं शुभकालश्च पश्य त्राणदिनन्त्विदम्।'

३ एतस्मिन् सेवकपदे यथा कोऽपि कलङ्को न जायते तदर्थं वयं कुत्रापि
४ विघ्नं न जनयित्वा वरम् बहुधा सहिष्णुत्वं क्लेशो दैन्यं विपत् प्रहारः
५ कारायां बन्धनं कलहः परिश्रमो जागरणम् अनाहारश्चैतानि भुक्त्वा; निर्म्म-
६ लत्वं ज्ञानं चिरसहिष्णुत्वं प्रीतिः पवित्र आत्मा अकपटं प्रेम सत्यवाक्यम्
७ ईश्वरस्य पराक्रमो दक्षिणवामयो र्धर्म्मरूपे अस्त्रशस्त्रे, एतैः सर्व्वैः सुसज्जी-
८ भूताः सन्तः; सम्मानम् असम्मानं यशोऽयशश्च लभमानाः; कपटिन इव किन्तु
९ सत्यवादिनः, अपरिचिता इव किन्तु सुपरिचिताः, म्रियमाणा इव किन्तु
१० जीवन्तः, प्रहृता इव किन्त्वविनष्टाः, दुःखिन इव किन्तु सदानन्दाः, दरिद्रा
इव किन्तु बहुभ्यो धनदायकाः, अकिञ्चना इव किन्तु सर्व्वैश्वर्य्यवन्तः,
११ एतैः सर्व्वै र्वयम् ईश्वरस्य सेवकान् स्वान् दर्शयामः। हे करिन्थिनः

वयं प्रफुल्लचित्ताः सन्तः स्पष्टं युष्मभ्यं कथयामः, अस्मान् प्रति १२
युष्माकं मनःस्वप्रफुल्लेषु सत्स्वपि युष्मान् प्रत्यस्माकं मनांसि प्रफुल्लानि
सन्ति। अत एतत् प्रेम्नः परिशोधार्थम् अहं निजबालकेभ्य इव कथयामि १३
युष्माकमपि मनांसि तद्वत् प्रफुल्लानि भवन्तु।

अपरम् अप्रत्ययिभिः सार्द्धम् अयोग्येन बन्धनेन बद्धा मा भूत यस्माद् १४
धर्म्माधर्म्मयोः कः सम्बन्धोऽस्ति? तिमिरेण सार्द्धं प्रभायाश्च कः
सम्बन्धोऽस्ति? तथा बालदेवतया सार्कं ख्रीष्टस्य का बन्धुता? अविश्वा- १५
सिभिश्च सार्द्धं विश्वासिलोकानाम् अंशः कः? ईश्वरस्य मन्दिरेण सह
प्रतिमायाः कः सम्बन्धः? यूयम् अमरेश्वरस्य मन्दिरस्वरूपा भवथ, ईश्वरो १६
यथा कथितवान् 'अहं तेषाम् अन्तरुषित्वा तैः सह गमिष्यामि, अहं
तेषाम् ईश्वरो भविष्यामि, ते मम लोका भविष्यन्ति। अपरं परमेश्वरो- १७
ऽकथयद् यूयं तेषां मध्यात् पृथग् भूत्वागच्छत किमप्यमेध्यं वस्तु न स्पृशत;
ततः सर्व्वशक्तिमान् परमेश्वरः कथयति, अहं युष्मान् ग्रहीष्यामि युष्माकं
पिता भविष्यामि यूयञ्च मम कन्यापुत्रा भविष्यथ।' अतएव हे १८
प्रियलोका ईश्वरस्य एतादृशप्रतिज्ञायाः कथां प्राप्य वयं शरीरस्या-
त्मनश्च सर्व्वस्मान् मालिन्यात् स्वान् परिष्कृत्य ईश्वराद् भीत्वा धर्म्मकृत्यं
साधयामः।

---

७ सप्तमोऽध्यायः।

१ करिन्थिनः प्रति पौलस्य विनयः ५ तीतन तेषां वार्त्तायां प्राप्तायां पौलस्य यत् सुखं तस्य निर्णयश्च।

यूयम् अस्मान् गृह्लीत। वयं कस्याप्यन्यायं नाकार्ष्म तथा कमपि भ्रष्टं १
नाकार्ष्म कमपि वञ्चितञ्च नाकार्ष्म। अपरं युष्मान् दोषिणः कर्त्तुम् अहं २
वाक्यम् एतद् वदामीति नहि युष्माभिः सह जीवितुं मर्त्तुञ्च मदीयं मनो ३
वाञ्छति कथामेतां पूर्व्वमहं कथितवान्। अहं युष्मान् प्रति सुस्पष्टं कथ- ४
यामि युष्माकं बहुश्लाघावाक्यं वदामि तस्माद् अस्माकं बहुषु कष्टेषु
जातेष्वपि प्रफुल्लचित्तः सन्नहम् आनन्देन परिपूर्णोऽस्मि।

५ अस्मासु माकिदनियादेशम् आगतेषु वहिर्विरोधोऽन्तराधिरित्थं
६ सर्व्वतो दुःखग्रस्तत्वात् क्षणमप्यस्माकं शरीरेषु विश्रामो नासीत्। किन्तु
दीनानां सान्त्वयिता य ईश्वरः स तीतस्योपस्थितत्वेनास्मान् असान्त्वयत्।
७ केवलं तन्न युष्माकं गाढाभिलाषसन्तापौ तथास्मान् प्रति युष्माकं मनसां
प्रीतिं विलोक्य तीतो यादृशीं सान्त्वनां लब्धवान् तद्वृत्तान्तं तस्माद् अहं
८ निशम्य ततोऽधिकम् आनन्दिषम्। अपरम् अहम् पत्रं लिखित्वा युष्मान्
दुःखिनः कृतवान् इत्यस्माद् अन्वतपं किन्त्विदानीं नानुतपामि यस्मात्
९ तत् पत्रं क्षणमात्रं युष्माकं दुःखकारकम् अभवत्। यूयं दुःखिनो जाता
अस्माद् अहम् आह्लादितवान् इति नहि किन्तु यूयं येन दुःखेन दुःखिनो
जाताः, तद्दुःखं युष्माकं मनः परावर्त्तिजनकम् इत्यस्माद् आह्ला-
दितवान्; अपरञ्च यूयम् ईश्वरम् उद्दिश्य खेदम् अकुरुत, अतएवास्मत्तो
१० युष्माकं हानिः सर्व्वथा नाभवत्; यत ईश्वरम् उद्दिश्य यत् खेदकरणं तद्
दुःखं न जनयित्वा परित्राणजनकं मनःपरावर्त्तनं जनयति किन्तु
११ सांसारिको यो खेदः स मृतिं जनयति। पश्यत यूयम् ईश्वरस्य गोचरे
तत्पापार्थं यं खेदं कृतवन्तः स खेदो युष्माकं कति सावधानत्वं दोषप्रक्षा-
लनम् असन्तोषं भीतिं गाढाभिलाषं व्यग्रत्वं दण्डकरणेच्छाञ्च जनितवान्
१२ एतस्मिन् यूयं यत् परिष्कृता इत्यम् तस्य सम्पूर्णप्रमाणम् अदत्त। तस्माद्
अपकारिणम् अपकृतं वा कञ्चन जनं दुःखिनं कर्त्तुम् अहम् अलिखम्
इति नहि किन्त्वीश्वरस्य समक्षं युष्मदर्थम् अस्माकम् उद्योगो यथा
१३ प्रकाश्यते तदर्थं लिखितवानहं। एतस्माद् युष्माकं सान्त्वनाप्राप्तिवार्त्तां
श्रुत्वा वयमपि सान्त्वनां प्राप्ताः विशेषात् तीतस्य मनो युष्माभि र्यद्
१४ आप्यायितं तस्माद् वयमपि तस्यानन्दाद् आनन्दिताः। अपरञ्च तीतस्य
समक्षम् अहं युष्मासु यद् अश्लाघे तेन नालज्जे किन्तु यद्वद् वयं युष्मान् प्रति
सकलं सत्यमेव कथयामः तद्वत् तीतस्य समक्षं वयं यद् अश्लाघामहि
१५ तदपि सत्यमभवत्। अपरञ्च यूयम् अतिशयभयात् कम्पमाना यादृक्
तस्यातिथ्यं कृतवन्तो यादृक् च तदाज्ञां गृहीतवन्तः, तत् स्मृत्वा युष्मान्

प्रति तस्यापि क्रमशः स्नेहो जायते। तस्मात् सर्व्वतो यूयं विश्वासयोग्या १६
इति ज्ञात्वा प्रमोदितोऽभवम्।

---

## ८ अष्टमोऽध्यायः।

१ अन्यजनानां दृष्टान्तः ख्रीष्टस्य प्रेम्ना यिरूशालमस्थदरिद्रलोकेभ्यो दातुं करिन्थिनः प्रति पौलस्य निवेदनं १६ तान् प्रति नीतस्य तदन्यभ्रातुश्च प्रशंसावाक्यम्।

हे भ्रातरो माकिदनियादेशस्थाय समाजाय दत्तो य ईश्वरस्यानुग्रह- १
स्तं युष्मान् ज्ञापयामि। वस्तुतो बहुताडनापरीक्षया तेषाम् अती- २
वानन्दत्वे सत्यपि सुखातिशयत्वात् ते बाहुल्यम् अददुः। ते स्वेच्छया यथा- ३
शक्ति वरं मया प्रमाणीक्रियते तेऽतिशक्ति दाने प्रवर्त्तमानाः, पवित्रलोका- ४
नाम् उपकारार्थम् अंशं दानञ्च ग्रहीतुम् अस्मान् बहु व्यनयन्त। वयं यादृग् ५
अन्वमिमीमहि तादृङ् कृत्वा प्रथमतः प्रभुम् उद्दिश्य स्वान् समर्प्य पश्चाद्
ईश्वरेच्छयास्मान् उद्दिश्य स्वान् समार्पयन्। तत्र तीतो यस्मिन् कर्म्मणि ६
युष्माकं मध्ये प्रावर्त्तत तत् कर्म्म साधयितुम् अस्माभिः स विनीतः।
अतएव विश्वासो वाक्यपाटवं ज्ञानं सर्व्वोद्यमोऽस्मासु प्रेम चैतैर्गुणै र्यथा ७
गुणवन्तो विद्यध्वे तथैतद्दातृत्वगुणेन चातिगुणवन्तो भवत। इमां कथाम् ८
आज्ञया कथयामीति नहि किन्त्वन्येषां जनानाम् उद्यमं युष्माकं प्रेम-
सारल्यञ्च परीक्षितुं कथयामि। अपरम् अस्माकं प्रभो यीशुख्रीष्टे धन- ९
वत्यपि तस्य दरिद्रतया यूयं यथा धनवन्तो भवथ तदर्थं स निर्धनो-
ऽभवत् तदीयानुग्रहोऽयं युष्माभि र्ज्ञायते। अस्मिन् मम परामर्शोऽयं १०
एतत्कर्म्मकरणं युष्माकम् उपयुक्तं यस्माद् एतस्मिन् कर्म्मणि युष्माभि र्नवीन
उद्यमः कृत इति नहि, अद्य यावत् सम्वत्सरं एतत्कर्म्मणि यतध्वे। अत ११
इदानीं तत् समापयत तथाहि पूर्व्वं कर्म्मारब्धुं यादृशी मतिरासीत्
स्वस्वविक्तानुसारात् तत् समापयितुमपि युष्माकं तादृशी मति र्भूयात्।
यदि कश्चिद् दातुम् इच्छा जायते तर्हि तदीयं धनम् अधिकम् अल्पं वा १२
भवेत् तदनुसारेण तद् ग्राह्यं भविष्यति। इतरेषां लोकानां विश्राम- १३

१४ निमित्तं यूयं यत् भाराक्रान्ता भवथ मम सोऽभिप्रायो नहि; किन्त्वि-
दानीं युष्माकं वित्तानां प्राज्यतया यथा तेषां दैन्यं नाश्यते, ततः परं तेषां
द्रविणानां प्रभूततया च युष्माकं दारिद्र्यं नाशिष्यते, तादृक् समत्वविधानं
१५ मदीय आशयः। शास्त्रेपि यथा लिखितम् आस्ते येनाधिकसञ्चयः कृतः
तस्य किमप्यधिकं नाभीत् येनाल्पं समचायि तस्य कापि न्यूनता नासीत्।
१६ युष्माकं हिताय तीतस्य मनसि य ईश्वर इमं उद्योगं जनितवान् स
१७ धन्यो भवतु। सोऽस्माकं विनयवाक्यं गृहीतवान् केवलं तन्न वरञ्च स्वयम्
१८ उद्योगं कृत्वा स्वेच्छया युष्माकं समीपं गतवान्। तत एकस्य प्रभो र्महि-
मानं युष्माकं दानशालित्वञ्च द्योतयितृभिरेतस्य दानकर्म्मणोऽधि-
१९ पतिभिरस्माभिः सह गन्तुं समाजै र्नियुक्त इति केवलं न सुसंवादेन
सर्व्वेषु समाजेषु सुख्यातिमान् एको भ्राता तेन सार्द्धम् प्रेषितः।
२० अपरञ्च यत् प्रभूतं धनम् अस्माभि र्हस्तैः प्रेषितं तत्र यथा कश्चिद्
२१ अस्मासु दोषं नारोपयति तदर्थम् ईश्वरस्य दृष्टौ केवलं तन्न लोकानां
२२ दृष्टौच यो य आचार उचितो भवति तत्र सावधाना अभवाम। तस्माद्
अनेकेषु कार्य्येषु यं वारं वारम् उद्योगिनम् पश्यामस्तं भ्रातरम् अन्यैः
२३ सह प्रेषितवन्तः। तीतं परिचेतुं यदि कश्चित् पृच्छति तर्हि युष्मन्निमित्तं
स मदीय एकोऽंशी सहायश्चेति; भ्रातृन् परिचेतुं यदि कश्चित् पृच्छति
तर्हि समाजैः प्रेषिताः ख्रीष्टस्य महिमप्रकाशका इति परिचयं दास्यथ।
२४ इत्थं वयं तेषां समाजानाञ्च साक्षात् स्वेषां प्रेम युष्मास्वस्माकं श्लाघा-
वाक्यञ्च सप्रमाणं कुरुत।

---

९ नवमोऽध्यायः।

१ दातुम् उद्यतान् करिन्थिनः प्रति प्रशंसा ६ दानफलस्य निर्णयश्च।

१ पवित्रलोकेभ्यो विश्राणनार्थं युष्मान् प्रति लिखनम् अधिकमेव यतो
२ युष्माकं दानशीलतां विज्ञाय आखायादेशीया लोका दातुम् उद्यता
वर्षमेकं जातं माकिदनियालोकानां समीपेऽहम् इदमेकं श्लाघावाक्यम्
अवादिषम तत्र युष्माकम् उद्योगं विलोक्य तस्मिन् बहूनां मति र्भवति।

तथापि युष्माकस्माकं सा श्लाघा यथा वृथा न भवति तदर्थं युष्माकं समीपं ३
भ्रातृगणं प्रेषितवान् अतो येन मदीयं वाक्यं तिष्ठति तथैव सज्जी-
भवत। यस्माद् यदि माकिदनियालोका मया सार्द्धम् आगच्छन्ति ४
युष्मान् तादृक् मज्जितान् न पश्यन्ति च तर्हि यूयं यल् लज्जि-
ष्यध्वे तन्न वदामि वरञ्च वयं गाढश्लाघायाः कथाम् अकथयाम तस्माद्
अस्माभि र्लज्जितव्यम्। यतएव यस्य दानस्य कथा पूर्व्वम् उक्ता अग्रे ५
गत्वा तद्दानं ग्रहीतुं भ्रातॄन् विनीय युष्माकं समीपं प्रेषयितुं प्रयोजनं
अविद्म; तथा सति युष्माकं तद्दानं कार्पण्येन न भूत्वा स्वेच्छया भवतीति
व्यञ्जिष्यति।

अपरमपि व्याहरामि यो जनोऽल्पवीजं वपति सोऽल्पशस्यं कर्त्तिष्यति ६
यो भूरिवीजं वपति स भूरिशस्यं कर्त्तिष्यति। अतो यूयम् एकैको जनो ७
मनसा निरूपणानुसारतोऽकातर्य्येण स्वेच्छया दानं कुरुध्वं यत ईश्वरः स्वैरं
दातरि प्रीयते। अपरं येन युष्माकं कस्याप्यभावो न विद्यते येन च यथेष्टं ८
प्राप्य सर्व्वस्मिन् उत्तमकर्म्मणि बहु यतध्वे तादृशम् अनुग्रहम् ईश्वरो
युष्मान् प्रति करोति; यादृशं लिखितम् आस्ते,

९ 'व्ययते स धनं नित्यं दरिद्रेभ्यो ददाति च।
नित्यस्थायी च तद्धर्म्मः'

यो वपनार्थं वीजं भोजनार्थम् अन्नञ्च ददाति स युष्माभिरुप्तं वीजं १०
बहुलीकृत्य युष्माकं दानधर्म्मस्य फलं बर्द्धयतु; तथा सति सर्व्वस्मिन् युष्माकं ११
दानशीलतयास्माभिरीश्वरस्य धन्यवादो भविष्यति। यतो युष्माकम् एतेन १२
दानकर्म्मणा पवित्रलोकानां दैन्यं नाश्यत इति केवलं नहि वरं तेनेश्वरस्य
धन्यवादोपि बाहुल्यं जायते। वस्तुतो यूयं स्वेच्छया ख्रीष्टीयसुसंवादस्य १३
वशिनो भवथ, तथा तान् अन्यांश्च प्रति बहुदानशीला भवथ, युष्माकम्
एतेन दानेन तेऽस्य प्रमाणम् प्राप्येश्वरस्य धन्यवादं कुर्व्वन्ति; तथा युष्मा- १४
कमीश्वरस्यातिशयानुग्रहं वीक्ष्य युष्मासु बहु प्रेम कृत्वा युष्मदर्थं नित्यं १५
प्रार्थयन्ते। ईश्वरस्यानिर्व्वचनीयदानात् तस्य धन्यवादो भवतु।

१० दशमोऽध्यायः।

१ विपक्षलोकानां सन्निधौ स्वस्य निर्दोषत्वकरणं ७ इतरलोकानां कर्म्म स्वीयं प्रोच्य श्लाघनाद् विपक्षाणां दोषित्वकरणञ्च।

१ प्रत्यक्षे क्षुद्रः किन्तु परोक्षे महान् इव पौलोऽहं ख्रीष्टस्य नम्रतया
२ मृदुतया च युष्मान् विनये। ये जना अस्मान् सांसारिकाचाराचारिणो
३ विदन्ति तेषां विरुद्धं येनाक्षोभेनाहम् अक्षोभो भवितुं निश्चिनोमि, उप-
स्थितिसमये तादृगक्षोभो यथा न भवामि मदीय एष एव विनयः। यतो
वयं सांसारिकाचाराचारिणोऽपि सांसारिकाचाराचारिण इव न संग्राम-
४ यामहे। वस्तुतस्तु यैरस्त्रशस्त्रै र्वयं युध्यामस्तानि दुर्ब्बलानि न भवन्ति
५ किन्तु दुर्गभञ्जनार्थम् ईश्वरात् प्रबलानि भवन्ति, अपरञ्च तै र्वयं सर्व्व-
वितर्कस्य ईश्वरस्य तत्त्वज्ञानस्य च विरोधिन्या गर्व्वकारण्याश्च यावत्य-
श्चिन्ताः सन्ति ताः सर्व्वा उत्पाट्य ख्रीष्टस्य वशिनीः कृत्वा स्थापयामः।
६ अपरञ्च युष्माकम् आज्ञाग्राहित्वे सिद्धे ये जना आज्ञां न गृह्णन्ति तान्
दण्डयितुम् उद्यतोऽस्मि।

७ यूयं किं पक्षपातं कुर्व्वन्तो विचारयथ? अहं ख्रीष्टस्य लोक इति यदि
कश्चन मनसि स्वं जानाति तर्हि स पुनर्विविच्य पश्यतु स यथा ख्रीष्टस्य
८ लोकाः वयमपि तथा ख्रीष्टस्य लोकाः। तस्माद् युष्माकं विनाशार्थं नहि
किन्तु निष्ठार्थं प्रभुणास्मभ्यं यत् सामर्थ्यम् अदायि तस्य यदि किञ्चित्
९ श्लाघां करोमि तथापि तस्मात् न त्रपिष्ये। अहं पत्रेण युष्मान् भीषया-
१० मीति बोधो युष्माकं न भूयात्। लोकैरुच्यते तस्य पत्राण्यति-
गुरुतराणि सप्रमाणानि भवन्ति किन्तु तस्मिन् उपस्थिते तस्य वपु र्दुर्ब्बलं
११ तद्वाक्यन्तु तुच्छं। अस्माभिः पत्रैः परोक्षे यादृशी कथा कथ्यते समक्षे
१२ तथैव कार्य्यं कारिष्यते तादृशैरिति ज्ञायतां। ये जनाः स्वप्रशंसां
स्वयमेव कुर्व्वन्ति तैः सार्द्धं स्वान् गणयितुम् उपमातुं वा वयम् अक्षोभा
न भवामः किन्तु ते स्वाम् स्वयं परिमाय स्वेषां तुलनां विधाय
१३ ज्ञानिन इव कर्म्म न कुर्व्वन्ति। वयं स्वेषां परिमाणातिशयं श्लाघां न कृत्वा
अस्मभ्यम् ईश्वरेण दत्ता या परिमापिका रज्जु र्युष्माकं समीपपर्य्यन्तं